* ॥ श्रीगणेशाय नमः ॥ *

# ॥ दीक्षाप्रकाशः ॥

ज्योतिर्विदा श्रीमन्मैथिलजीव-
नाथशर्म्मणा विरचितः ।

श्रीलश्रीमैथिलस्वामिकृतभास्करपाठशाला-
यां ज्योतिःशास्त्रप्रधानाध्यापकेन मैथिलभूसु-
रेण झोपाख्य श्रीकृष्णदत्तशर्मणा संशोधितः ।

श्रीयुत् पं० श्रीकृष्णदत्तबलदेवदत्त
शर्म्मभ्यां "विक्टोरिया" नामक
स्वकीय यन्त्रालये मुद्रितः ।

यन्त्राधीशस्याज्ञानुसारेण शुक्लोपनामक
श्रीयुत् पं० रघुनन्दनप्रसादशर्मणा प्रकाशितः ।

काश्याम् संवत् १९६० ।

# ॥ अथ दीक्षाप्रकाशः ॥

॥ श्रीः ॥

श्रीगणेशाय नमः ॥ सृष्टिस्थितिलयकर्त्री नगपतिपुत्री पुमर्थसन्दात्री। काचिन्नवजलदाभा विधिहरिवन्द्या जयत्याद्या ॥ १॥ साधकानां हितार्थाय जीवनाथेन धीमता। दीक्षाप्रकाशःक्रियते तन्त्रसारानुसारतः॥ २॥ अथ दीक्षानित्यता । यामले । अदीक्षितानां मर्त्यानां दोषं शृण्वन्तु साधकाः। अन्नं विष्ठासमं ज्ञेयं जलं मूत्रसमं तथा। अदीक्षितकृतं श्राद्धं श्राद्धं चादीक्षितस्य च। गृहीत्वा पितरस्तस्य नरके चाशुदारुणे। पतन्त्येव न सन्देहो यावदिन्द्राश्चतुर्दश। तथाप्यदीक्षितस्यार्चान्देवा गृह्णन्ति नैव हि। तस्माददीक्षितं दृष्ट्वा सचैलं स्नानमाचरेत्। दीक्षाग्रहणकाले तु पापराशिःप्रलीयते। निर्वाणपदसंयुक्तो बहिर्गच्छति तत्परः। सर्व्वाश्रमेषु दीक्षाया नित्यत्वं परिचक्षते। अनीश्वरस्य मर्त्यस्य नास्ति त्राता सुरेश्वरि। तथा दीक्षाविहीनस्य नेह त्राता परत्र च। न तपोभिर्ज्जपैर्होमैरुपचारैश्च साधनैः॥ दिव्यं ज्ञानं यतो दद्यात्कुर्य्यात्पापस्य संक्षयम्। तस्माद्दीक्षेति सा प्रोक्ता मुनिभिस्तन्त्रवेदिभिः। दीक्षामूलं जगत्सर्वं दीक्षामू-

लं परन्तपः। दीक्षामाश्रित्य निवसेद्यत्र कुत्राश्रमे जनः। अदीक्षितश्च मरणे रौरवं नरकं व्रजेत्। तस्माद्दीक्षां प्रयत्नेन गृह्णीयादागमान्मुदा। तथा चोक्तं ताराकल्पे। कल्पे दृष्ट्वा तु मन्त्रं वै यो गृह्णाति नराधमः।मन्वन्तरसहस्रेषु निष्कृतिर्नै व जायते। पितुर्म्मन्त्रं न गृह्णीयात्तथा मातामहादपि। सोदरस्य कनिष्ठस्य वैरिपक्षाश्रितस्य चाप्रमादाद्वा तथाज्ञानात्पितृदीक्षां समाचरेत्। प्रायश्चित्तं ततः कुर्यात्पुनर्दीक्षां समाचरेत्। पितुर्दीक्षा यतेर्दीक्षा दीक्षा च वनवासिनः। अनाश्रमाणां या दीक्षा सा दीक्षा दुःखदायिनी।अन्यतन्त्रेपि। पितुर्मन्त्रं न गृह्णीयात्तथा वैराश्रितस्य च।कदाचिदपि गृह्णाति पुनः संस्कारमर्हति।निर्वीर्यन्तु पितुर्म्मन्त्रं शैवे शाक्ते न दुष्यति। इति कौलिकमन्त्रदीक्षापरम्। तथा च योगिनीतन्त्रे। शक्तिदीक्षामधिकृत्य पितृदीक्षानिषेधात्। महातीर्थे उपरागे सति सर्वत्र न दोषः।तथा च विष्णुमन्त्रमधिकृत्य। साधुपृष्टन्त्वया ब्रह्मन् वक्ष्यामि सकलं तव।ब्रह्मणा कथितं पूर्व्वं वसिष्ठाय महात्मने।वसिष्ठोपि स्वपौत्राय मत्पित्रे दत्तवान्स्वयम्। प्रसन्नहृदयः स्वच्छः पिता मे करुणानिधिः कुरुक्षेत्रे महातीर्थे सूर्य्यपर्वणि दत्तवान्।इत्यादि वैशम्पायनीयसंहितायां शौनकम्प्रतिव्यासवाक्यम्। योगिनीतन्त्रे। निर्व्वीर्यन्तुपितुर्म्मन्त्रं तथा मातामहस्य च। स्वप्नलब्धं

स्त्रिया दत्तं संस्कारेणैव शुध्यति। यत्तु। साध्वी चैव सदाचारा गुरुभक्ता जितेन्द्रिया।सर्वमन्त्रार्थतत्वज्ञा सुशीला पूजने रता। गुरुयोग्या भवेत्सा हि विधवा परिवर्ज्जिता। स्त्रियो दीक्षा शुभा प्रोक्ता मातुश्चाष्टगुणा स्मृता।इदन्तु गुरोरुपासितमन्त्रपरम्। तथा च भैरवीतन्त्रे। स्वीयमन्त्रोपदेशे तु न कुर्य्याद्गुरुचिन्तनम्। मातुरित्युपासिते अष्टगुणम्। अनुपासिते शुभफलदमित्यर्थः। सिद्धमन्त्रविषयं वेति केचित्। योगिनीतन्त्रे।स्वप्नलब्धे च कलशे गुरोःप्राणं निवेशयेत्। वटपत्रे कुङ्कुमेन लिखित्वा ग्रहणं शुभम्। ततः सिद्धिमवाप्नोति अन्यथा विफलं भवेत्। इदन्तु सद्गुरोरभावे।तत्सम्भवे तस्मादेव ग्रहणं कुर्य्यात्।स्वप्ने तु नियमो नहीति नारदवचनात्। अथ गुरुलक्षणम्। शान्तो दान्तः कुलीनश्च विनीतः शुद्धवेशवान्। शुद्धाचारः सुप्रतिष्ठः शुचिर्दक्षः सुबुद्धिमान्। आश्रमी ध्याननिष्ठश्च तन्त्रमन्त्रविशारदः। निग्रहानुग्रहे शक्तो गुरुरित्याभिधीयते।अथ निन्द्यगुरुलक्षणम्। श्वित्री चैव गलत्कुष्ठी नेत्ररोगी च वामनः।कुनखी श्यामदन्तश्च स्त्रीजितोह्यधिकाङ्ककः। हीनाङ्गः कपटी रोगी बह्वाशी बहुजल्पकः।एतैर्दोषैर्विहीनो यः सगुरुः शिष्यसम्मतः। अथ शिष्यलक्षणम्।शान्तः सुनीतः शुद्धात्मा श्रद्धावान्धारणाक्षमः।समर्थश्च कुलीनश्च प्राज्ञः सच्चरितो व्रती। एवमादि-

T

गुणैर्युक्तः शिष्यो भवति नान्यथा।गुरुता शिष्यता वापि त-योर्व्वत्सरवासतः।तथा चोक्तं सारसङ्ग्रहे।तद्गुरुः स्वाश्रितं शिष्यं वर्षमेकं परीक्षयेत्।राज्ञि राष्ट्रकृतं पापं पत्नीपापं स्वभ-र्त्तरि।तथा शिष्यार्ज्जितं पापं गुरुःप्राप्नोति निश्चितम्।अ-तःसद्गुरोराप्तदीक्षःसन् सर्वकर्म्माणि साधयेत्। तत्राप्यनु-कूलमन्त्रं गृह्णीयात्। तथा च। सुताराराशिकोष्ठानामनु-कूलान्भजेन्मनून्।तथा च वाराहीतन्त्रे। ताराचक्रं राशिच-क्रं नामचक्रं तथैव च। अत्र चेत्सद्गुणो मन्त्रो नान्यचक्रं वि-चारयेत्। इदन्तु प्रधानतया बोध्यम्।तथा च। धनीमन्त्रं न-गृह्णीयादकुलञ्च तथैव चेत्यादिदर्शनात्तत्तच्चक्रविचारस्या वश्यकत्वमिति। नृसिंहार्कवराहाणान्तारप्रासादयोरपि। सपिण्डाक्षरमन्त्राणां सिद्धादीन्नैव शोधयेत्। तारः प्रणवः। प्रासादः हौं सपिण्डाक्षरः कूटमन्त्र इति। स्वप्नलब्धे स्त्रि-या दत्ते मालामन्त्रे च त्र्यक्षरे।वैदिकेषु च सर्व्वेषु सिद्धादीन्नै व शोधयेत्। मालामन्त्रस्तु वाराहीये। विंशत्यर्णाधिक्यम-न्त्रा मालामन्त्राःप्रकीर्त्तिता इति। हंसस्याष्टाक्षरस्यापि त-था पञ्चाक्षरस्य च।एकद्वित्र्यादिबीजस्य सिद्धादीन्नैव शोध-येत्। हंसमन्त्रस्तु। हकारेण बहिर्य्याति सकारेण विशेत्पुनः हंसहंसेति मन्त्रोयं जीवो जपति सर्वदेति।काली तारा महा-विद्या षोडशी भुवनेश्वरी। भैरवी छिन्नमस्ता च विद्या धूमा.

वती तथा। बगला सिद्धिविद्या च मातङ्गी कमलात्मिका। एकादश महाविद्याः सिद्धिविद्याः प्रकीर्तिताः॥नात्र सिद्धाद्यपेक्षास्ति न नक्षत्रविचारणा।कालादिशोधनं नास्ति न च मित्रादिशोधनमित्यादिवचनादेतेषां विचारो नास्ति।वस्तुतस्तु प्रशंसापरमिदम्।सर्वत्र विचारस्यावश्यकत्वमिति साम्प्रदायिकाः।तत्रादौ कुलाकुलचक्रमाह। निबन्धे।वाय्वग्नि भूजलाकाशाः पञ्चाशल्लिपयः क्रमात्। पञ्च ह्रस्वाःपञ्च दीर्घा वृद्धान्ताःसन्धिसम्भवाः। कादयः पञ्च शःषक्षलसहान्ताःस मीरिता इति। अआएकचटतपयषा मारुताः। इईऐखछठथफरक्षा आग्नेयाः। उऊओगजडदबलला:पार्थिवाः। ऋॠ औघझढधभवसा वारुणाः। लृॡअंङञणनमशहा नाभसा इति॥ साधकस्याक्षरं पूर्वं मन्त्रस्यापि तदक्षरम्। यद्येक भूतं दैवत्यं जानीयात्स्वकुलं हि तत्।भौमस्य वारुणं मित्रमाग्नेयस्यापि मारुतम्।मारुतं पार्थिवानाञ्च आग्नेयं चाम्भसां रिपुः।नाभसं सर्वमित्रं स्याद्विरुद्धं नैव शीलयेत्। पार्थिवे वारुणं मित्रं तैजसं शत्रुरुच्यत इति॥अथोदाहरणं। यथा जीवनाथः। एतस्याद्याक्षरञ्जकारः। सच पार्थिवः। मन्त्रस्तु ॐनमःशिवायेति। अस्य प्रथमाक्षरमोकारः। अयमपि पार्थिवः।अत्र द्वयोरेकभूतत्वादुत्तमोऽयं मन्त्रःशुभफलद इति

(२) विन्द्वन्ता इति पाठान्तरम्।

यदिश्रांह्रींक्रोमिति मन्त्रः।तर्हि एतस्य वायुतत्वं।जकारस्य भूतत्वस्य रिपुरतोऽयं मन्त्रो न शुभ इति।मारुतः पार्थिवानां रिपुरित्युक्तेः। अथ राशिचक्रम्। आगमकल्पद्रुमे। सूत्रद्वयं पूर्वपरायतश्च तन्मध्यतो याम्यकुबेरभेदात्।एकैकमीशाननिशाचरे तु हुताशवायौ विलिखेत्ततोऽर्णान्। वेदा ४ ग्नि ३ वह्नि ३ युगल २ श्रवणा २ क्षि २ सङ्ख्यान् पञ्चे ५ षु ५ बाण ५ शर ५ पञ्च ५ चतुष्टया ४ र्णान्। मेषादितस्तु गणयेत्सकलांस्तु वर्णान्कन्यागतान्प्रविलिखेदथ साद्यवर्णानिति। अआइईमेषे। उऊऋवृषे। ॠऌॡमिथुने। एऐकर्के। ओऔसिंहे। अंअःशषसहळक्षाःकन्यायाम्।कवर्ग ५ स्तुलायां। चवर्गो वृश्चिके। टवर्गो ५ धनुषि। तवर्गो मकरे।पवर्गः कुम्भे।यवर्गो मीने। एवं ज्ञेयम्। स्वराशेर्मन्त्रराश्यन्तं गणनीयं विचक्षणैः। राशीनां शुद्धता ज्ञेया त्यजेच्छत्रुं ६ मृतिं ८ व्ययम् १२। यदा स्वराशेरज्ञानं तदा साधकः प्रसिद्धस्वनामाद्यक्षरसम्बन्धिनं राशिं गृहीत्वा गणयेत्। साध्याक्षरराश्यन्तं गणयेत्साधकाक्षरादिति। एक १ पञ्च ५ नव ९ बान्धवाः स्मृता द्वौ २ च षट् च ६ दशमश्च १० सेवकाः। वह्नि ३ रुद्र ११ मुनय ७ श्च पोषका द्वादशा १२ ष्ट ८ चतुरस्तु घातका। इति विष्णुविषयम्। शक्त्यादौ तु षष्ठाष्टमद्वादशं त्यजेत्।तथा च तन्त्रराजे।तेन म-

T

न्त्राद्यवर्णेन नाम्नां चाद्यक्षरेण च। गणयेद्यदि षष्ठं वाप्यष्टमं द्वादशं तुवा॥ रिपुर्म्मन्त्राद्यवर्णः स्यात्तेन तस्याहितं भवेदिति। अस्योदाहरणम्। जीवनाथस्य प्रथमाक्षरं वृश्चिकराशावस्ति तेन साधकस्य वृश्चिकराशिः॥ मन्त्राद्यक्षरमोमिति तस्य सिंहराशिः। अत्र साधकराशेर्द्दशमराशौ मन्त्रराशिरतोऽयं शुभफलद इति॥ एवमन्यत्रापि॥ अथ नक्षत्रचक्रमेतदुक्तं मन्त्रमहोदधौ। तद्यथा॥ उत्तरादाक्षिणाग्रास्तु रेखास्तु चतुरःक्रमात्। दश रेखाःपश्चिमाग्राः कर्तव्याःसाधकोत्तमैः। नेत्र २ भू १ गुण ३ वेद ४ क्ष्मा १ धरा १ युगल २ भू १ भुजाः २। द्वि २ चन्द्र १ भुज २ बाङ्क २ क्षि २ भू १ नेत्र २ त्रि ३ धरा १ गुणाः ३। एकै १ क १ भू १ भुजे २ न्दु १ क्षि २ राम ३ चन्द्रा १ उडुष्वथ। अश्विन्यादिषु विज्ञेया आदिवर्णाः क्रमाद्बुधैः॥ क्षान्ता विन्दुविसर्गौ तु रेवत्यंशे व्यवस्थितौ इति। यदा मन्त्राद्यक्षरं अ वा आ तदा तस्य भमश्विनी। इकाराक्षरं चेद्भरणी। ईउऊचेत्कृत्तिका। एवमग्रेपि। एवं प्रथमाक्षरवशान्नक्षत्रंनक्षत्रात्ताराज्ञानं गणज्ञानञ्च। तथैव साधकस्यापि प्रथमाक्षरवशान्नक्षत्रं नक्षत्रात्तारागणज्ञानं कुर्य्यात्। अत्रोदाहरणम्। ओंनमःशिवायेति मन्त्रः। अस्याऽद्यक्षरमोमिति। ओकारस्य पुनर्वसुनक्षत्रं देवगणः साधकतारा सिंहराशिरिति। जीवनाथ इति साधकः। त-

T

स्याद्यक्षरवशादुत्तराफाल्गुनीनक्षत्रं गणो नरःतारा प्रत्यरिः वृश्चिकराशिरिति।अथ नक्षत्रात्ताराज्ञानमाह। जन्मसम्पद्विपत्क्षेमप्रत्यरिः साधको वधः । मैत्रं परममैत्रञ्च गणनीयं स्वनामभात्। विपद्वधःप्रत्यरिश्च त्यजेदन्यदुदूत्तमामिति। अत्र साधकस्य उत्तराफाल्गुनीनक्षत्रं तस्मान्मन्त्रनक्षत्रपर्य्यन्तं सङ्ख्या २३ नवभि ९ श्शेषिता ५ तस्मात्प्रत्यरितारेति तस्माद्दुष्टा तारा ज्ञेया।अथ गणविचारः।पूर्वोत्तरात्रयञ्चैव भरण्यार्द्रा च रोहिणी। इमानि मानुषान्याहुर्नक्षत्राणि मुनीश्वराः।ज्येष्ठाशतभिषामूलं धनिष्ठासर्प्यकृत्तिकाः।चित्रा मघा विशाखा च एता राक्षसदेवताः।अश्विनी रेवती पुष्यः स्वाती हस्तःपुनर्वसुः।अनुराधा मृगश्चैव श्रवणो देवतारका इति।स्वजातौ परमा प्रीतिर्म्मध्यमा भिन्नजातिषु। रक्षोमानुषयोर्न्नाशो वैरं दानवदेवयोरिति। अत्र नरदेवगणयोर्म्मध्यमा प्रीतिरिति वचनान्मध्यमत्वं । मन्त्रस्येति ॥ १ ॥ अथाकडमचक्रम् । तदुक्तं मन्त्रमहोदधौ । साधकस्य तु नामादि वर्णमारभ्य शोधयेत्। मन्त्राद्यक्षरपर्य्यन्तं चक्रे सिद्धादिके क्रमात्।जन्मर्क्षोत्थं प्रसिद्धं वा नाम ग्राह्यं प्रशोधयेत्। ऊर्ध्वगाःपञ्च रेखाःस्युः पञ्च तिर्य्यग्गताः पुनः। कोष्ठानि तत्र जायन्ते षोडशैवात्र संलिखेत्। भू १ राम ३ शिव ११ नन्दा ९ क्षि २ वेदा ४ र्क १२ दिग्र १० सा ६

ष्ट ० भिः ८ । कला १३ मनु १४ शरै ५ रद्रि ७ तिथि १५ विश्वै १३ । मितेषु च । कोष्ठेषु मातृका वर्णास्तत्र नामादितः क्रमात् । सिद्धः साध्यः सुसिद्धोऽरिर्ज्ञेयो मन्वक्षरावधि । यस्मिन् चतुष्के नामार्णः ततः सिद्धचतुष्टयम् । प्रादक्षिणयात्तद्द्वितीयं साध्याख्यन्ततृतीयकम् । सुसिद्धाख्यं चतुर्थन्तु सपत्नाख्यं स्मृतं बुधैः । एककोष्ठे द्वयोर्वर्णः सिद्धसिद्धः प्रकीर्तितः । तद्द्वितीये मन्त्रवर्णः सिद्धसाध्य उदाहृतः । तृतीये सिद्धसुसिद्धः सिद्धारिः स्याच्चतुर्थके । नामार्णयुक्चतुः कोष्ठान्मन्त्रवर्णश्चेद्द्वितीयके । चतुष्के तत्र पूर्वन्तु यत्र नामाक्षरं स्थितम् । तत्र तत्कोष्ठमारभ्य गणयेत्पूर्ववत्क्रमात् साध्यसिद्धः साध्यसाध्यस्तत्सुसिद्धश्च तद्रिपुः । एवं ज्ञेयं तृतीये चेच्चतुष्के मन्त्रवर्णकः । तदा पूर्वोक्तया रीत्या क्रमाज्ज्ञेया विचक्षणैः । सुसिद्धसिद्धस्तत्साध्यस्तत्सुसिद्धश्च तद्रिपुः । चतुर्थे तु चतुष्के स्यादरिसिद्धोरिसाधकः । तत्सुसिद्धोऽर्य्यरिः पश्चादेवं मन्त्रं विचारयेत् । सिद्धसिद्धो यथोक्तेन द्विगुणात्सिद्धसाधकः । सिद्धसुसिद्धोर्द्धजपात्सिद्धारिर्हन्ति बान्धवान् । साध्यसिद्धो द्विघ्नजपात्साध्यसाध्यो निरर्थकः । द्विघ्नजपात्तत्सुसिद्धः साध्यारिर्हन्ति गोत्रजान् । सुसिद्धसिद्धोर्द्धजपात्तत्साध्यो द्विगुणा-

ज्जपात् । तत्सुसिद्धो ग्रहादेव सुसिद्धारिः कुटुम्बहा । अरिसिद्धः सुतं हन्यादरिसाध्यस्तु कन्यकाम् । तत्सुसिद्धश्च पत्नीघ्नस्तदरिः साधकापहः । अन्यत्रापि । सिद्धः सिद्ध्यति कालेन साध्यस्तु जपहोमतः । सुसिद्धो ग्रहणादेव रिपुर्मूलं निकृन्तति । अथादौ चतुरस्रं विधाय तत्र षोडशकोष्ठेषु । भू १ राम ३ शिव ११ नन्दा ९ क्षि २ वेदा ४ र्क १२ दश १० षड ६ ष्ट ८ षोडश १६ चतुर्दश १४ पञ्च ५ सप्त ७ पञ्चदश १५ त्रयोदश १३ प्रमितेषु कोष्ठेषु क्रमादकारादि वर्णान्पुनः पुनः संविलिख्य । कोष्ठचतुष्कं सिद्धसाध्यादि विचिन्त्य पुनश्चतुष्के सिद्धादिगणना कार्य्या । अयमर्थः । यस्मिंश्चतुष्के नामादिवर्णः स्यात् । तच्चतुष्कमारभ्य प्रादक्षिण्येन सिद्धसाध्यसुसिद्धारीन् गणयेत् । अत्र स्वनामाद्यक्षरमारभ्य मन्त्रादिमाक्षरं यावत् चतुर्भिश्चतुर्भिः कोष्ठकैः सिद्धः साध्यः सुसिद्धः अरिश्च ज्ञेयः । तदुक्तं विश्वसारे । इन्द्वग्निरुद्रनवनेत्रयुगार्कदिक्षुऋत्वष्टषोडशचतुर्दशभौत्तिकेषु । पातालपञ्चदशविश्वमिते हि कोष्ठे वर्णान्लिखेल्लिपिभवान्क्रमशस्तु धीमान् । नामाद्यक्षरमारभ्य यावन्मन्त्रादिमाक्षरम् । चतुर्भिः कोष्ठकैरेकैकमिति कोष्ठचतुष्टयम् । पुनः कोष्ठगकोष्ठेषु सव्यतो नाम्न आ-

दित इति । अत्रोदाहरणं यथा । जीवनाथ इति साधकः । ओं नमः शिवाय इति मन्त्रः । अत्र चतुर्थचतुष्के साधकनामाद्यक्षरमस्ति । तदेव सिद्धाख्यं प्रथमं । तस्माद्द्वितीयचतुष्के मन्त्राद्यक्षरमस्ति तस्मात्साध्याख्यो मन्त्र इति । यत्र नामाद्यवर्णस्थचतुष्के मन्त्रादिमवर्णश्चेत्सिद्धः । तद्द्वितीये मन्त्रवर्णः साध्यः । तत्तृतीये सुसिद्धः । तत्तुरीये त्वरिमन्त्रः । यथा जकाराक्षरसाधकस्य । ऐमिति मन्त्रः सिद्धः । ह्रीमिति मन्त्रः साध्यः । आमिति मन्त्रः सुसिद्धः । गामिति मन्त्रोऽरिमन्त्र इति । अथ यदि एककोष्ठे साध्यसाधकयोर्वर्णस्तदा सिद्धसिद्धः । तस्माद्द्वितीयकोष्ठे मन्त्रवर्णश्चेत्तदा सिद्धसाध्यः । तस्मात्तृतीये सिद्धसुसिद्धः । तस्माच्चतुर्थे मन्त्रवर्णस्तदा सिद्धारिः । अथ यदि नामाद्यक्षरयुक्तचतुष्कोष्ठान्मन्त्राद्यर्णो द्वितीयचतुष्के भवति तदा पूर्वचतुष्के यत्र कोष्ठे नामाद्यक्षरं वर्त्तते तत्र तत्कोष्ठमारभ्य पूर्ववद्गणयेदिति । प्रथमे साध्यसिद्धः । द्वितीये साध्यसाध्यः । तृतीये कोष्ठे साध्यसुसिद्धः । चतुर्थे साध्यारिः । अथैवं तृतीये चतुष्के मन्त्रवर्णश्चेत्पूर्वरीत्या प्रथमे सुसिद्धसिद्धः । द्वितीये सुसिद्धसाध्यः । तृतीये सुसिद्धसुसिद्धः । चतुर्थे सुसिद्धारिः । एवं चतुर्थचतुष्के । अरिसिद्धः । अरिसा-

ध्यः। अरिसुसिद्धः। चतुर्थेऽर्य्यरिः। एवं गणने कृते षोडशभेदा भवन्ति। यथा। सिद्धसिद्धः १ सिद्धसाध्यः २ सिद्धसुसिद्धः ३ सिद्धारिः ४ साध्यसिद्धः ५ साध्यसाध्यः ६ साध्यसुसिद्धः ७ साध्यारिः ८ सुसिद्धसिद्धः ९ सुसिद्धसाध्यः १० सुसिद्धसुसिद्धः ११ सुसिद्धारिः १२ अरिसिद्धः १३ अरिसाध्यः १४ अरिसुसिद्धः १५ अर्य्यरिः १६ इति। अत्रोदाहरणं यथा। नामार्णयुक्तचतुष्कोष्ठात् द्वितीयचतुष्के तृतीयकोष्ठे मन्त्राद्यक्षरमस्ति तस्मात्साध्यसुसिद्धोऽयमन्त्रः। जकारस्य एमिति मन्त्रः सिद्धसाध्यः। ह्रीमिति मन्त्रः साध्यारिः। आमिति मन्त्रः सुसिद्धारिः। शामिति मन्त्रः सुसिद्धसुसिद्धः। गमिति मन्त्रः अर्य्यरिः। एवमन्यत्। अथ प्रकारान्तरेण सिद्धादिशोधनमाह। नाम्नो मन्त्रस्य वर्णांश्च लिखित्वा प्रतिवर्णकम्। सिद्धादिगणना कार्य्या यावन्मन्त्रसमापनम्। नाम्नो यदि समाप्तिः स्यात्पुनर्न्नाम लिखेत्सुधीः। एवं संशोधितेषु स्युर्भूयः साध्यवैरिणः। अल्पाः सिद्धसुसिद्धाश्चेदशुभं व्युत्क्रमाच्छुभम्। मतमित्थं तु केषाञ्चित्तदपि प्राज्ञसम्मतम्। नाम्न इति व्युत्क्रमात्। सिद्धसाध्यसुसिद्धानां बहुत्वे साध्यारीणामल्पत्वे शुभमिति। अथ प्रकारान्तरेण

सिद्धादिशोधनं मन्त्रमहोदधौ। द्वादशारे लिखेच्चक्रे व. र्णान्पूर्वादितः क्रमात्। ईशानान्तमकाराद्यान् हान्तान् बुक्षविवर्ज्जितान्। तत्र नामार्णमारभ्य मन्त्राद्यर्णावधि· क्रमात्। गणयेत्सिद्धसाध्यादि फलन्तेषान्तु पूर्ववत्। सि· द्धो नवैकबाणेषु ९।१।५ साध्यो रसदिगक्षिषु ६।१०।२ सुसिद्धः त्रिमुनीशेषु ३।७।११ रिपुर्वेदाष्टभानुषु ४।८।१२ इत्यकडम्चक्रन्तु गोपालविषयम्। तदुक्तं वाराहीये। ता. राशुद्धिर्वैष्णवानां कोष्ठशुद्धिः शिवस्य च॥ राशिशुद्धिस्त्रिपुरे च गोपालेऽकडमः स्मृत इति। अथ प्रकारान्तरेण सिद्धादिशोधनमाह॥ चतुष्कोष्ठेषु विलिखेदादीन्वर्णान्पुनः पुनः। नामार्णात्सिद्धसाध्यादि ज्ञेयं मन्वक्षरावधि॥ अथ प्रकारान्तरेण सिद्धादिशोधनम्॥ नाम्नो मन्त्रस्य वर्णाढ्यं चतुर्भिर्विभजेत्सुधीः। एकादिशे. षे सिद्धादि जानीयात्पूर्ववत्फलम्। अथ ऋणधनशोधनचक्रम्॥ तदुक्तं मन्त्रमहोदधौ॥ अथर्णधनसंशुद्धिः कथ्यते सिद्धिदायिनी। सप्त तिर्य्यग् लिखेद्रेखा द्वादशैवोर्ध्वगाः पुनः॥ एवं कृते तु जायन्ते कोष्ठाः षट्षष्टि- ६६ सम्मिताः॥ आद्यपङ्क्तौ लिखेदङ्कांस्ते कथ्यन्ते यथाक्रमम्। मनु १४ नक्षत्र २७ नेत्रा २ र्क १२ तिथि- १५ षट् ५ वेद ४ वन्हयः ३॥ अष्टका ८ वसवो ८।

T

नन्दाः ९ कोष्ठेषु क्रमतः स्थिताः ॥ द्वितीयपङ्क्तौ संले-
ख्याः पञ्चदीर्घैर्भिर्भूताः स्वराः ॥ तृतीयपङ्क्तौ काद्यर्णान्
टकारान्तान् क्रमाल्लिखेत्॥ ठादि फान्ताश्चतुर्थ्यां तु पञ्च-
म्यां बादिहान्तिमाः । षष्ठ्यां पङ्क्तौ क्रमाल्लेख्या अङ्काः
कथ्यन्त एव ते ॥ दिक् १० चन्द्र १ मुनि ७ वेदा ४
ष्ट ८ गुण ३ सप्ते ७ षु ५ सागराः ४ । रसाश्च ६ राम-
सङ्ख्या तु साधकाङ्काः प्रकीर्तिताः॥ मन्त्र वर्णान्पृथक् कु-
र्यात्स्वरव्यञ्जनरूपतः । कोष्ठे यावति वर्णःस्याद्गुणयेत्ता-
वदङ्कम् ॥ कोष्ठोपरिस्थेनाङ्केन सर्ववर्णेष्वयं विधिः॥
दीर्घाक्षराणामङ्कास्तु ज्ञेया लघ्वक्षरास्थिताः । एकीकृत्या-
खिलानङ्कानष्टभि ८ र्विभजेत्पुनः ॥ शेषाङ्को मन्त्ररा-
शिः स्यान्नामवर्णेष्वयं विधिः ॥ अधः पङ्क्तिस्थितैरङ्कै-
र्गुणनीयास्तु तेऽखिलाः॥ अधमर्णोऽधिको राशिरूनो रा-
शिर्धनी स्मृतः । मन्त्रो यदाधमर्णः स्यात्तदा ग्राह्यो धनी न
तु ॥ अथैषां समुदायार्थः । कोष्ठे यावतीति । अत्र धन-
र्णचक्रे यावति कोष्ठे मन्त्रवर्णः । तमङ्कमुपर्य्यङ्केन गुण-
येत् । यथा प्रथमकोष्ठाङ्क एक एव १ अकारोपरिस्थिता-
ङ्कैश्चतुर्दशभि १४ र्गुणितश्चतुर्दश एव । एवमाकारस्या-
पि । अकारकोष्ठाधः स्थितानां ककारठकारबकाराणा-
ञ्च कोष्ठाङ्क एक एव १ तदुपर्य्यङ्क १४ गुणितश्चतुर्दश

एव। एवं द्वितीयकोष्ठे इकारः ईकारश्च तत्कोष्ठप्रमाणं २ तदुपरिस्थिताङ्कैः सप्तविंशतिभि २७ र्गुणितं चतुष्प. ञ्चाशत्। पुनरिकाराधः स्थितानां खकारडकारभकारा णा. मपि कोष्ठाङ्कप्रमाणं २ तदुपर्य्यङ्क २७ गुणितं चतुष्प- ञ्चाशदेव। एवमुकारस्तृतीयकोष्ठस्थः। तत्कोष्ठाङ्काः ३ त्र- य उपर्य्यङ्केन २ गुणिताः षट् ६। एवमुकाराधः स्थिता- नां गकारढकारमकारणामपि कोष्ठाङ्कास्त्रय३उपर्य्यङ्कैर्गु. णिताः षडेव६। एवमग्रेपि।ततःसाध्यवर्णानपि साध्यो मन्त्रः तस्य वर्णान् स्वरव्यञ्जनरूपतः पृथक् पृथक् स्वस्व. कोष्ठोपरिस्थिताङ्केन सङ्गुण्य तानेकीकृत्याष्टभक्तशेषः साध्यराशिर्म्मन्त्रराशिरित्यर्थः। एवं साधकाङ्कानपि स्वाङ्केन गुणितानेकीकृत्याष्टभक्तशेषः साधकराशि. रिति। अत्र मन्त्रराशिराधिकश्चेद्ग्राह्यः। अधमर्णोऽधि. को राशिरूनो राशिर्धनी स्मृतः। मन्त्रो यदा धमर्णः स्यात्तदा ग्राह्यो धनी न तु। अन्यत्रापि। मन्त्रो यदाधि. काङ्कः स्यात्तदा मन्त्रं जपेत्सुधीः। समेपि च जपेन्मन्त्रं न जपेत्तु ऋणाधिके। शून्ये मृत्युं विजानीयात्तस्माच्छु- न्यं विवर्ज्जयेदित्युक्तेः। अत्रोदाहरणम्। ॐनमः शिवाये. ति मन्त्रः। अत्र प्रणवे अ उ म् इति त्र्यक्षरः प्रणव इत्यु- क्तेः। तत्राकारस्य पूर्वरीत्या १४ उकारस्य ६ मकारस्य-

५ ततो नकारस्य ७२ अकारस्य १४ ततो मः इत्यस्य मकारस्य ५ अकारस्य १४ विसर्गस्य ६६ ततः शीत्यस्य अत्र शकारस्य २४ इकारस्य ५४। ततो वकारस्य २८ आकारस्य १४। ततो यकारस्य ४८ अकारस्य १४ एतेषां योगः ४१३ अष्टभक्तशेषाङ्कः (५) मन्त्रराशिरयम्। एवं साधको जीवनाथ इति। अस्य स्वरव्यञ्जनरूपतः। व्यञ्जनसङ्ख्या ४०। ४६। ३६। १८ स्वरसङ्ख्या २। १०। १०। १०। ३३। सर्वयोगो २०८ ष्टभक्तशेषाङ्कः (०) साधकराशिरयम्।

---

[ कु० त: ]

(१) अत्र विहितचक्रे साध्यस्य साधकस्य चाष्टभक्तावशेषाङ्कानां निजानां निजानां योगेऽप्यष्टतष्टे सति स्वस्वराशिः स्यात्। अत्रोदाहरणम्। साध्यः

| | | | | | |
|---|---|---|---|---|---|
| ३ | ० | ६ | ० | ४ | ० |
| ॐ | न | मः | शि | वा | य |
| ६ | ६ | ६ | ६ | ६ | ६ |
| ६ | | ३ | | | |

अत्र (अ) स्य शेषाङ्कः (६) तथा (उ) कारस्य शेषाङ्कः (६) मस्य शेषाङ्कः (६) एवं नस्य शेषाङ्कः (०) तथा अस्य (६) एवं मस्य (६) तथा अस्य (६) विसर्गस्य च (३) एवं शकारस्य (०) तथा इकारस्य (६) एवं वस्य (४) तथा आस्य (६) एवं यस्य (०) अस्य च (६) एतेषां योगोयं (६१) अष्टतष्टः (५) साध्यराशिः। अथ साधकः। जीवनाथः। अत्र जस्य (०) इकारस्य [२] तथा वस्य (१) अस्य (२) नस्य (४) आ (२) यस्य (२) अस्य (२) विसर्गस्य [१] एतेषां योगोयं [१६] अष्टतष्टः [०] साधकराशिः [८]

| | | | |
|---|---|---|---|
| ० | १ | ४ | २ |
| जी | व | ना | थः |
| २ | २ | २ | २ |
| | | | १ |

अत्र साधकराशिरधमर्णः।मन्त्रराशिर्धनी ज्ञेयः।तस्माद्ग्राह्य एव। अत्र शून्यशेषे हरतुल्य एवाङ्कोज्ञेयः (८)इत्यलम्। अथ प्रकारान्तरेण धनर्णमाह।नामाद्यक्षरमारभ्य यावन्मन्त्रादिमाक्षरम्। गणयेन्मातृकावर्णक्रमेण गुणयेत्त्रिभिः॥ विभक्ते सप्तभिःशिष्टो नामराशिरुदाहृतः।एवं मन्त्रार्णमारभ्य यावन्नामादिमाक्षरम् ॥ गणयित्वा त्रिभिर्हत्वा विभजेत्सप्तभिः सुधीः । मन्त्रराशिः स्मृतःशिष्टः पूर्ववद्धनितार्णतेति ॥ उदाहरणम् । अत्र जकारमारभ्य ओमित्यन्तं सङ्ख्या ३७ त्रिगुणा १११ सप्ततष्टा ६ । एवं मन्त्रादिमाक्षरमोमिति । तेन ओकारात्साध्याद्यक्षरजकारपर्य्यन्तं सङ्ख्या १२ त्रिगुणा ३६ सप्ततष्टा १ । अत्रापि मन्त्रराशेरल्पत्वाद्धनित्वमिति ॥ अथ प्रकारान्तरमाह ॥ यद्वा मन्त्राक्षराणीह स्वर[2]व्यञ्जनरूपतः । पृथक्कृत्य द्विगुणयेद्योजयेत्साधकाक्षरैः ॥ तादृशैरष्टभिस्तष्टैर्म्मन्त्रराशिरु-

(१) छ० द० ।

अत्र णकारादिङकारान्ता ऌ ॡ रहिता वर्णा बोध्याः । प्रकृते तु जकारादि एकारान्तं वर्ण संख्या षड्विंशतिमिता ( २६ ) तथा ओमित्यत्र अकारादि (ओ) रान्तं अआ इई उऊ ऋ ॠ एऐ ओं । एकादशसङ्ख्या (११) तद्योगो जकारादनुस्वारान्तं जातः ( ३७ ) ।

( २ ) युक्तवर्णे यावन्तो वर्णास्ते ग्राह्याः । यथ कृष्णदत्तः । इति साधकः । अत्र क् ऋ ष् ण् द् त् त् वर्णसङ्ख्या ( ६ ) तथा ऋ अ अ अ मात्रासङ्ख्या (४) तद्योगः ( १० ) ।

दाहृतः । एवं नामार्णसङ्घोपि द्विगुणीकृत्य योजितः ॥ मन्त्रवर्णैरष्टतष्टो नामराशिः स्मृतो बुधैः । ऋणिता धनिता चात्र पूर्ववत्परिकीर्त्तितेति ॥ उक्तान्यतममार्गेण शोधनीयमृणं धनमिति । अत्रोदाहरणम् । ओं न मः शि वा य । अ उ म् न् म् श् व् य् । अ अ (विसर्गः) इ आ अ । जी व ना थः । ज् व् न् थ् । ई अ आ अ ( विसर्गः )। तत्र मन्त्र सङ्ख्या १४ द्विगुणा २८ साधकाक्षरमात्राभिः ९ युता ३७ अष्टभिश्शेषिता ५ । एवं साधकस्य जीवनाथस्य सङ्ख्या ९ द्विगुणा १८ मन्त्राक्षरमात्रासङ्ख्याभिः १४ युता ३२ अष्टभिश्शेषिता ० हरतुल्यं शेषम् । यो मन्त्रः पूर्वजनुषि सेवितो नाददात्फलम् । पश्चात्पापक्षये जाते फलावाप्तिरनेहसि ॥ आयुःक्षयाद्गतो नाशं साधकस्य भवान्तरे । ऋणत्वात्प्राप्तिमात्रेण मन्त्रोऽभीष्टं प्रयच्छति ॥ समाङ्कौ यदुभौ राशी तदा संसेवनात्फलम् । धनी मन्त्रस्तु सम्प्राप्तः फलत्यधिकसवेया ॥ मन्त्राणां शोधने भूयः प्रकारान्तरमुच्यते । षट्कोणे विलिखेत्पूर्वकोणाद्येकैकवर्णकान् ॥ अकारादिहकारान्तान् नपुंसकविवर्जितान् । नामाद्यक्षरमारभ्य मन्त्रार्णावधि शोधयेत् ॥ प्रथमे सम्पदां प्राप्तिर्द्वितीये धनसंक्षयः । तृतीये धनसम्प्राप्तिश्चतुर्थे बन्धुविग्रहः ॥ पञ्चमे तु भवेद्व्याधिः षष्ठे सर्वस्य संक्षयः । एवं संशो-

धितं मन्त्रं दद्याच्छिष्याय मान्त्रिक इति ॥ अथारिमन्त्रत्यागप्रकारः ॥ अरिमन्त्रो गृहीतश्चेदज्ञानवशतस्तदा । तस्य त्यागः प्रकर्त्तव्यस्तत्प्रकारोऽधुनोच्यते ॥ सुदिने स्थापयेत्कुम्भं सर्वतोभद्रमण्डले । विलोमं सञ्जपन्मन्त्रं पूरयेत्तं सुपाथसा ॥ तत्र देवं समावाह्य यजेदावरुणादिकम् । तदग्रे स्थण्डिलं कृत्वा प्रतिष्ठाप्यानलं ततः ॥ जुहुयान्मूलमन्त्रेण विलोमेन शतङ्घृतैः । दिक्पतिभ्यो बलिन्दद्यात्पायसान्नैर्घृतान्वितैः ॥ पुनः सम्पूज्य देवेशं प्रार्थयेन्मनुनाऽमुना ॥ आनुकूल्यमनाऽऽलोच्य मयातरलबुद्धिना ॥ यदुपास्तं पूजितञ्च प्रभो मन्त्रस्वरूपकम् । तेन मे मनसः क्षोभमशेषं विनिवर्त्तय ॥ पापं प्रतिहतञ्चास्तु भूयाच्छ्रेयः सनातनम् । ततोऽनु मम कल्याणं पावनीभक्तिरस्तु मे । एवं सम्प्रार्थ्य देवेशङ्कर्प्पूरागुरुचन्दनैः । विलोमं विलिखेन्मन्त्रन्तालपत्रे तदर्च्चयेत् ॥ प्रबद्ध्य निजमस्ते तत्स्नायात्कुम्भस्थितैर्ज्जलैः ॥ पुनः सम्पूर्य्य तन्तोयैस्तत्रास्ये मन्त्रपत्रकम् ॥ सम्पूज्य कुम्भं नद्यां वै तडागे वा विनिक्षिपेत् । विप्रान्सम्भोज्य मुच्येत पीडयाऽसौ मनूत्थया ॥ अनेकधा शोधने चेच्छुद्धिं न प्राप्यते मनुः ॥ मायां कामं श्रियञ्चाऽऽदौ

[१] छ० द०

मायाबीजं [ ह्रीँ ] कामबीजं [ क्लीं । श्रीं बीजं लक्ष्मीबीजं च [ श्रीं ] भवेदमवधेयम् । यद्यनेकधा चक्रविचारेण कस्यचित्साधकस्य यन्मन्त्रशुद्धिर्न भवेत । तदा तन्मन्त्रादौ विहितबीजं दत्वा तच्छुद्धिः । तद्यथा । राम इति मन्त्रस्य चेच्छुद्धिर्न स्यात्तदा ( ह्रीँ ) इत्यस्य तदादौ योजनात्तच्छुद्धिः । ह्रीँ राम । एवमन्यत्रापि बोध्यम् ।

दद्यात्तद्दोषमुक्तये॥ यद्वा दुष्टो मनुर्ज्जप्तः सिद्ध्येत्प्रणवसम्पुटः। यद्वा क्रमोत्क्रमगया प्रजप्तो वर्णमालया॥ यत्र यस्य भवेद्भक्तिर्विशेषः स मनूत्तमः।वैरिकोष्ठमपि प्राप्तोऽभीष्टदस्तस्य जायते॥ इति षट्चक्रशोधनप्रकरणम्॥ अथ दीक्षाकालव्यवस्था॥ मन्त्रारम्भस्तु चैत्रे स्यात्समस्तपुरुषार्थदः। वैशाखे रत्नलाभः स्याज्ज्येष्ठे तु मरणं भवेत्॥ आषाढे बन्धुनाशः स्याच्छ्रावणे वित्तवर्द्धनम्। भाद्रे प्रजाविनाशः स्यादाश्विने रत्नसञ्चयः॥ कार्त्तिके मन्त्रसिद्धिः स्यान्मार्गशीर्षे तथा भवेत्। पौषे तु शत्रुपीडा स्यान्माघे मेधाविवर्द्धनम्॥ फाल्गुने सर्वकामाः स्युर्म्मलमासं विवर्ज्जयेत्। चैत्रे तु दीक्षाफलं गोपालविषयं गौतम्युक्तत्वात्। मधुमासे भवेद्दीक्षा दुःखायेति वचनान्नान्यत्र। आषाढनिषेधोपि श्रीविद्यातिरिक्तविषये॥ ज्येष्ठे मृत्युप्रदा चैव आषाढे धनसम्पदेति योगिनीहृदयात्। अथ वारनियमः॥ रविवारे भवेद्वित्तं सोमे शान्तिः प्रकीर्त्तिता। आयुरङ्गारके हन्ति तत्र दीक्षां विवर्ज्जयेत्॥बुधे सौन्दर्य्यमाप्नोति ज्ञानं स्यात्तु बृहस्पतौ। शुक्रे सौभाग्यमाप्नोति यशोहानिः शनैश्चरे॥ विशेषो गारुडतन्त्रे। गुरुवारे सुखं विद्याच्छुक्रौ चार्कः प्रशस्यते। शिवे च गुरुवारः स्यात्सौरे चान्द्रः प्रशस्यते॥ अफला बुधवारे तु दीक्षा ज्ञानविनाशिनी। अथ

तिथिनियमः। प्रतिपदि कृता दीक्षा ज्ञाननाशकरी मता। प्रतिपत्तिर्द्वितीयायां तृतीयायां शुचिर्भवेत्॥ चतुर्थ्यां वित्तनाशः स्यात्पञ्चम्यां वित्तवर्द्धनम्। षष्ठ्यां ज्ञानक्षयं प्रोक्तं सौख्यं स्यात्सप्तमीतिथौ॥ अष्टम्यां बुद्धिनाशः स्यान्नवम्यां वपुषः क्षयः। दशम्यां राजसौभाग्यमेकादश्यां शुचिर्भवेत्॥ द्वादश्यां सर्वसिद्धिः स्यात्त्रयोदश्यां दरिद्रता। तिर्य्यग्योनिश्चतुर्दश्यां हानिर्म्मासावसानके॥ पक्षान्ते धर्म्मवृद्धिः स्यादस्वाध्यायं विवर्ज्जयेत्॥ सन्ध्यागर्जितनिर्घोषभूकम्पोल्कानिपातनम्॥ एतानन्यांश्च दिवसान् श्रुत्युक्तान्परिवर्ज्जयेत्। द्वादश्यामपि कर्त्तव्यं त्रयोदश्यामथापि वा॥ यत्र त्रयोदशीविधानं तद्विष्णुविषयं रामार्च्चनचन्द्रिकाधृतत्वात्। त्रयोदशी च दशमी प्रशस्ता सर्वकामदेति सनत्कुमारवचनात्॥ अथ नक्षत्रनिर्णयः॥ अश्विन्यां सुखमाप्नोति भरण्यां मरणं ध्रुवम्। कृत्तिकायां भवेद्दुःखी रोहिण्यां वाक्पतिर्भवेत्॥ मृगशीर्षे सुखावाप्तिरार्द्रायां बन्धुनाशनम्। पुनर्वसौ धनाप्तिः स्यात्पुष्ये शत्रुविनाशनम्॥ अश्लेषायां भवेन्मृत्युर्म्मघायां दुःखमोचनम्। सौन्दर्य्यं पूर्वफल्गुन्यां प्राप्नोत्यत्र न संशयः॥ ज्ञानञ्चोत्तरफल्गुन्यां हस्ते चैव धनी भवेत्। चित्रायां ज्ञानसिद्धिः स्यात्स्वात्यां शत्रुविनाशनम्॥ विशाखायां सुखं चानुरा.

धायां बन्धुवर्धनम् । ज्येष्ठायां पुत्रहानिः स्यान्मूलभे कीर्त्तिवर्द्धनम् ॥ पूर्वाषाढोत्तराषाढे भवेतां कीर्त्तिदायिके । श्रवणायां भवेद्दुःखं धनिष्ठायां दरिद्रता ॥ बुद्धिः शतभिषायान्तु पूर्वभाद्रे सुखी भवेत् । सौख्यं चोत्तरभाद्रे तु रेवत्यां कीर्त्तिवर्द्धनम् ॥ अथ योगनिर्णयो विश्वसारे ॥ शुभः सिद्धिश्च आयुष्मान् ध्रुवयोगस्ततः परम् । प्रीतिः सौभाग्ययोगश्च वृद्धियोगस्ततः परम् ॥ हर्षणश्च तथा योगः सर्वतन्त्रे सुखावहः । अथ करणनिर्णयः ॥ बवश्च बालवश्चैव कौलवन्तैतिलन्तथा । करणानि शुभान्येव सर्वतन्त्रेषु भामिनि ॥ अथ लग्ननिर्णयः ॥ वृषे सिंहे च कन्यायां धनुर्मीनाख्यलग्नके । चन्द्रतारानुकूले च कुर्य्याद्दीक्षाप्रवर्त्तनम् ॥ स्थिरलग्नं विष्णुमन्त्रे शिवमन्त्रे चरन्तथा । द्विस्वभावगतं लग्नं शक्तिमन्त्रेषु शस्यते ॥ अथ पक्षनिर्णयः ॥ शुक्लपक्षे शुभा दीक्षा कृष्णेप्यापञ्चमी तथा । निषिद्धमासेतु तत्तु विशेषो दिनभेदतः ॥ आगमकल्पद्रुमे ॥ षष्ठी-भाद्रपदे मासे त्विषे कृष्णा चतुर्द्दशी । कार्त्तिके नवमी शुक्ला मार्गे शुक्ला तृतीयका ॥ पौषे च नवमी शुक्ला माघे शुक्ला चतुर्थिका । फाल्गुने नवमी शुक्ला चैत्रे कामचतुर्द्दशी ॥ वैशाखे चाक्षया चैव ज्येष्ठे दशहरा तिथिः । आषाढे पञ्चमी शुक्ला श्रावणे कृष्णपञ्चमी ॥ एतानि देवपर्वाणि तीर्थकोटिफलं

लभेत्। अन्यमतञ्च॥ चैत्रे त्रयोदशी शुक्ला वैशाखे तु हरिप्रिया। ज्येष्ठे चतुर्द्दशी कृष्णा आषाढे नागपञ्चमी॥ श्रावणैकादशी भाद्रे रोहिणीसंयुताऽष्टमी। आश्विने च महापुण्या सिद्धिदा स्यान्महाष्टमी॥ कार्त्तिके नवमी शुक्ला मार्गशीर्षे तथासिता। फाल्गुने च सिता षष्ठी चेति कालविनिर्णयः॥ योगिनीतन्त्रे॥ अयने विषुवे चैव ग्रहणे चन्द्रसूर्य्ययोः। सूर्य्यसङ्क्रान्तिदिवसे युगाद्यायां सुरेश्वरि॥ मन्वन्तरासु सर्वासु महापूजादिने तथा। सूर्य्यग्रहणकालस्य समानो नास्ति भूतले॥ तत्र यद्यत्कृतं सर्वमनन्तफलदम्भवेत्। न वारतिथिमासादिशोधनं सूर्य्यपर्वणि॥ एवं चन्द्रग्रहणेपि तदुक्तं मत्स्यसूक्ते॥ न कुर्य्याच्छाक्तिकीं दीक्षां सूर्य्यपर्वणि साधकः। न कुर्य्याद्वैष्णवीं तान्तु यदि चन्द्रमसोग्रहः॥ एतच्च श्रीगोपालश्रीविद्येतरविषयम्। अमावास्या सोमवारे भौमवारे चतुर्द्दशी। सप्तमी रविवारे च सूर्य्यपर्वशतैः समा॥ शिष्यमाहूय गुरुणा कृपया दीयते यदा। तत्र लग्नादिकं किञ्चिन्न विचार्य्यं कथञ्चन॥ सर्वे वारा ग्रहाः सर्वे नक्षत्राणि च राशयः। यस्मिन्नहनि सन्तुष्टो गुरुः सर्वे शुभावहाः॥ योगिनीतन्त्रे॥ ग्रहणे च महातीर्थे नास्ति कालविनिर्णयः। गयायां भास्करक्षेत्रे विरजे चन्द्रपर्वते॥ चत्वरे च मतङ्गे च त-

थाशून्याश्रमेषु च। न गृह्णीयात्ततो दीक्षां तीर्थेष्वेतेषु पार्वति। इति दीक्षाकालनिर्णयः॥ अथ मन्त्राणां शारदातिलकोक्तदशसंस्कारप्रकारः॥ जननं जीवनं पश्चात्ताडनं बोधनं तथा। अथाभिषेको विमलीकरणाप्यायने पुनः॥ तर्प्पणं दीपनं गुप्तिर्दशैता मन्त्रसंस्क्रिया इति॥ मन्त्राणां मातृकामध्यादुद्धारो जननं स्मृतम्। प्रणवान्तरितन्कृत्वा मन्त्रवर्णाञ्जपेत्सुधीः॥ एतज्जीवनमित्याहुर्म्मन्त्रतन्त्रविशारदाः। मन्त्रवर्णान्समालिख्य ताडयेच्चन्दनाम्भसा॥ प्रत्येकं वायुना मन्त्री ताडनं तदुदाहृतम्। विलिख्य मन्त्रं तन्मन्त्री प्रसूनैः करवीरजैः॥ तन्मन्त्राक्षरसङ्ख्याकैर्हन्याद्रेफेन बोधनम्। स्वतन्त्रोक्तविधानेन मन्त्री मन्त्रार्णसङ्ख्यया॥ अश्वत्थपल्लवैर्म्मन्त्रमभिषिञ्चेद्विशुद्धये। सञ्चिन्त्य मनसा मन्त्रं ज्योतिर्म्मन्त्रेण निर्दहेत्॥ मन्त्रे मलत्रयं मन्त्री विमलीकरणन्त्विदम्। मलत्रयं यथा॥ आनवं १ मायिकं २ कार्म्मणं ३। मायिकं मायया चोत्थं पौरुषं कार्म्मणं मलम्। आनवं मानसं प्रोक्तंनिषिद्धं तन्मलत्रयम्॥ तारव्योमाग्निमनुयुग्दण्डी ज्योतिर्म्मनुःस्मृतः॥ तारः प्रणवः ओं दण्डी अनुस्वारः। व्योम हकारः अग्निः रकारःमनुः औकारः तेन ओं ह्रौं इति ज्योतिर्म्मन्त्रः॥ कुशोदकेन जप्तेन प्रत्यर्णं प्रोक्षणं मनोः। तेन

मन्त्रेण विधिवदेतदाप्यायनं मतम्॥ मन्त्रेण वारिणा मन्त्रे तर्प्पणन्तर्प्पणं स्मृतम्। मधुना तर्प्पणं शक्तौ शैवे दुग्धाज्येकेन च॥ पञ्चामृतेन देवेशि तर्पणं वैष्णवे तथा। अमुकमन्त्रं तर्प्पयामीति प्रयोगः। तारमायारमायोगो मनोर्दीपनमुच्यते॥ ॐह्रींश्रीं ततो मन्त्रस्यैकाक्षरमिति। अमुकमन्त्रस्यामुकाक्षरन्दीपयामीति प्रयोगः। जप्यमानस्य मन्त्रस्य गोपनन्त्वप्रकाशनम्॥ संस्कारा दश सम्प्रोक्ताः सर्वतन्त्रेषु गोपिताः॥ इति मन्त्रसंस्कारप्रकारस्समाप्तः॥ अथ मन्त्रावली लिख्यते॥ तत्रादौ गणेशमन्त्राः॥ वक्रतुण्डाय हुं ६ षड्लक्षं जपः ६००००० रायस्पोषस्य ददितानिधिदोरत्नधातुमान्। रक्षोहणोबलगहनोवक्रतुण्डाय हुं ३१ पूजार्चादिपूर्ववत्। अथोच्छिष्टगणपति मन्त्राः॥ हस्तिपिशाचिलिखे स्वाहा ९ ॐ ह्रीं गं हस्तिपिशाचिलिखे स्वाहा १२ गं हस्तिपिशाचिलिखे स्वाहा १० ॐ नमो भगवते एकदंष्ट्राय हस्तिमुखाय लम्बोदराय उच्छिष्टमहात्मने आं क्रों ह्रीं गङ्घे घे स्वाहा ३७ एकलक्षं जपः॥ ॐ हस्तिमुखाय लम्बोदराय उच्छिष्टमहात्मने। आंक्रोंह्रींक्लींक्रीह्रूं घेघे उच्छिष्टाय स्वाहा ३२ एकलक्षं जपः। अथ महागणपतिमन्त्रः। ॐ श्रीं ह्रीं ग्लौंगङ्गणपतये वर वरद सर्वजनं मे वशमानय स्वाहा २७ अ-

T

स्य पुरश्चरणं चतुश्चत्वारिंशत्सहस्राधिकचतुर्लक्षं जपः ॥ ह्रीं गं ह्रीं महागणपतये स्वाहा १२ लक्षञ्जपः ॥ अथ हरिद्रागणेशमन्त्रः ॥ ग्लं १ चतुर्लक्षं जपः ॥ अथ लक्ष्मीविनायकमन्त्रः ॥ ओं श्रीं गं सौम्याय गणपतये वर वरद सर्वजनं मे वशमानय स्वाहा २८ चतुर्लक्षं जपः । अथ त्रैलोक्यमोहनगणेशमन्त्रः॥वक्रतुण्डैकदंष्ट्राय क्लीं ह्रीं श्रीं गङ्गणपतये वर वरद सर्वजनं मे वशमानय स्वाहा ३४ चतुर्लक्षं जपः । एते मन्त्रमहोदधिमतेन लिखिताः । एतेषां पूजाप्रकारस्तत्रैव द्रष्टव्यः ॥अथ श्रीदक्षिणकालिकायाः॥ क्रीं क्रीं क्रीं हूँ हूँ ह्रीं ह्रीं दक्षिणे कालिके क्रीं क्रीं क्रीं हूँ हूँ ह्रीं ह्रीं स्वाहा २२। ओं ह्रीं ह्रीं हूँ हूँ क्रीं क्रीं क्रीं दक्षिणे कालिके क्रीं क्रीं क्रीं हूँ हूँ ह्रीं ह्रीं २१ । हूँ हूँ क्रीं क्रीं क्रीं ह्रीं ह्रीं दक्षिणे कालिके हूँ हूँ क्रीं क्रीं क्रीं ह्रीं ह्रीं स्वाहा २२ । क्रीं हूँ ह्रीं स्वाहा ५ क्रीं क्रीं क्रीं हूँ हूँ ह्रीं ह्रीं दक्षिणे कालिके स्वाहा १५ क्रीं क्रीं क्रीं ३। एकाक्षरी क्रीं १ क्रीं हूँ ह्रीं हूँ फट्५ क्रीं हूँ ह्रीं हूँ फट् स्वाहा ७ क्री हूँ ह्रीं त्र्यक्षरी ३ । एतेषां यजनं द्वाविंशत्यक्षरीवत् ॥ लक्षं जपः । रक्तकुसुमैर्होमः । अथ गुह्यकालीमन्त्राः। क्रीं क्रीं क्रीं हूँ हूँ ह्रीं ह्रीं गुह्यकालिके क्रीं क्रीं क्रीं हूँ हूँ ह्रीं ह्रीं ह्रीं स्वाहा २२ क्रीं गुह्यकालिके स्वाहा ८ हूँ गुह्यकालिके स्वाहा ८ ह्रीं गुह्यकालिके स्वाहा

८ इति विश्वसारे गुह्यकालीमन्त्रः । अथ भद्रकाल्याः । स्वतन्त्रे क्रीं क्रीं क्रीं हूँ हूँ ह्रीं ह्रीं भद्रकाल्यै क्रीं क्रीं क्रीं हूँ हूँ ह्रीं ह्रीं स्वाहा २०।अथ फूत्कारिणीतन्त्रे। हौं कालिमहाकालिकिलिकिलिफट् स्वाहा । अस्याः पुरश्चरणाद्यभावः । अन्यसां दक्षिणकालीवत् । अथ महाकालीमन्त्रः । फ्रें कारिण्याम् । ॐफ्रें फ्रें हूँ हूँ पशु गृहाण हूं फट् स्वाहा १४ ॐ हरहरस्तम्भस्तम्भकीलकीलस्वाहा १५ जपमात्रम् । अथ श्मशानकालीमन्त्रो विश्वसारे ॥ रेंनमः क्रींऐं नमः क्रीं कालिकायै स्वाहा १४ नमःऐं क्रीं क्रीं कालिकायै स्वाहा । क्रीं कालिकायै नमः । इति श्मशानकालीपुरश्चरणं लक्षञ्जपः । अथ शृङ्गारकाली । ऐं ह्रीं ॐ ऐं हूं फट् स्वाहा । पुरश्चरणं दक्षिणावत् । अथ सिद्धिकाली । ॐ ह्रीं ह्रीं मे स्वाहा ६ । पुरश्चरणमेकविंशतिसहस्रम् । अथ सुमुखीमन्त्रः । उच्छिष्टचाण्डालिनि सुमुखि देवि महापिशाचिनि ह्रीं ठः ठः ठः । लक्षं जपः । किंशुकपुष्पैर्होमः । अथ श्रीतारामन्त्रः । ॐ ह्रीं स्त्रीं हूँ फट् ५। एकजटायाः। ह्रीं श्रीं हूं फट्। अथ नीलसरस्वत्याः । ह्रीं स्त्रीं हूँ । चतुर्लक्षञ्जपः । क्षीराज्याक्तकमलैर्होमः । अथ ताराभेदाः । ॐ स्त्रीं ह्रीं हूँ ह्रीं हूँ फट् ७। ऐं ह्रीं श्रीं क्लीं सौः हूँ उग्रतारे हूँ फट् १२।ॐ ह्रीं हं ह्रीं हं फट् ६।ॐ हं ह्रीं क्लीं सौः हं फट् ७। अथैकज-

टामन्त्रान्तरम्। ओं ह्रीं नमो भगवत्येकजटे मम वज्रपुष्पं प्रतीच्छ स्वाहा २२ नीलसरस्वत्याःप्रकारान्तरम्। ऊँ श्रीं ह्रीं ह्सौः हूं फट् नीलसरस्वत्यै स्वाहा १४ पूजनादिकं पूर्ववत्। अथ छिन्नमस्तामन्त्रः। ऊँ श्रीं ह्रीं ह्रीं ऐं वज्रवैरोचनीये ह्रीं ह्रीं फट् स्वाहा १७। चतुर्ल्लक्षञ्जपः। पलाशश्रीवृक्षकुसुमैर्होमः। अथ रेणुकाशबरीमन्त्रः।ऊँ श्रीं ह्रींक्रों ऐं। ५ पञ्चलक्षञ्जपः। विल्वफलैर्होमः। अथ विवाहार्थं स्वयम्वरकला। ऊँ ह्रीं योगिनि २ योगीश्वरि २ योगभयङ्करि सकलस्थावरजङ्गमस्य मुखं हृदयं मम वशमाकर्षयाकर्षय स्वाहा ५० चतुर्ल्लक्षं जपः। पायसान्नेन होमः। अथ शीतलामन्त्रः। ऊँ ह्रीं श्रीं शीतलायै नमः। दशसहस्रञ्जपः पायसेन होमः। नाभिमात्रे जले स्थित्वा यः दशसहस्रं जपेन्मनुम्। तेन संमार्ज्जितास्तीव्राः स्फोटा नश्यन्ति तत्क्षणात्। अथ बालामन्त्रः। ऐं क्लीं सौः। लक्षत्रयं जपः। पलाशकुसुमैर्होमः। अथ त्रिपुरागायत्री क्लीं त्रिपुरादेवि विद्महे कामेश्वरि धीमहि तन्नः क्लिन्ने प्रचोदयात्। अथान्नपूर्णामन्त्रः। ऊँ ह्रीं श्रीं क्लीं नमो भगवति माहेश्वरि अन्नपूर्णे स्वाहा २० लक्षं जपः। चरुणा-होमः। अथ प्रत्यङ्गिरामन्त्रः। ऊँ ह्रीं यां कल्पयन्तिनोरयः क्रूरां कृत्यां वधूमिव। तां ब्रह्मणापनिर्णुद्मः प्रत्यक्कर्त्तार-

मृच्छतु ह्रीं ओं । अयुतं जपः । अपामार्गराज्याज्यहविर्भिर्होमः । अथ प्रत्यङ्गिरामालामन्त्रः । ओं ह्रीं नमः कृष्णवाससे शतसहस्रहिंसिनि सहस्रवदने महाबले अपराजिते प्रत्यङ्गिरे परसैन्यपरकर्म्मविध्वंसिनि परमन्त्रोत्सादिनि सर्वभूतदमनि सर्वदेवान् बन्ध बन्ध सर्वविद्याश्छिन्धि २ क्षोभय २ परयन्त्राणि स्फोटय २ सर्वशृङ्खलां त्रोटय ज्वलज्ज्वालाजिह्वे करालवदने प्रत्यङ्गिरे ह्रीं नमः। अयुतं जपः। तिलराजिकाभिर्होमः। अथ बगलामुखीमन्त्रः। ओं ह्लीं बगलामुखि सर्वदुष्टानां वाचं मुखं पदं स्तम्भय जिह्वां कीलय बुद्धिं विनाशय ह्लीं ओं स्वाहा ३६ लक्षं जपः। चम्पकपुष्पैर्होमः। अथ स्वप्नवाराहीमन्त्रः। ओं ह्रीं नमो वाराहि घोरे स्वप्नं ठः ठः स्वाहा १५ लक्षं जपः। नीलपद्मतिलैर्होमः। अथ त्रिपुरसुन्दरीमन्त्रः। श्रीं ह्रीं क्लीं ऐं सौः॥ ओं ह्रीं श्रीं क ए इ ल ह्रीं। हसकहल ह्रीं सकल ह्रीं सौः। ऐं क्लीं ह्रीं श्रीं इयं षोडशाक्षरी। लक्षं जपः। त्रिमधुरोपेतकरबीरपुष्पैर्होमः। इयं राजराजेश्वरी। यजनादिकं तन्त्रे द्रष्टव्यम्। अथ हनुमन्मन्त्रः। ह्रौं ह्स्फ्रें ख्फ्रें ह्स्रौं ह्स्ख्फ्रें ह्सौं हनुमते नमः १२ अर्कसहस्रं जपः। पयोदध्याज्यव्रीहिभिर्होमः। अथ प्रकारान्तरेण। नमो भगवते आञ्जनेयाय महाबलाय स्वाहा।

अयुतं जपः। तिलैर्होमः। अथ श्रीराममन्त्रः। रां रामाय नमः ६ हुं जानकीवल्लभाय स्वाहा १० वा ऊों ह्रीं श्रीं क्लीं ऐं रां ६ वा राम २ रामचन्द्र ४ रामभद्र ४ रामाय नमः।५।एते राममन्त्राः।श्रीवासुदेवमन्त्रः।ऊों नमो भगवते वासुदेवाय १२। नारायणमन्त्रः। ऊों नमो नारायणाय ८। श्रीकृष्णमन्त्रः। क्लीं कृष्णाय गोविन्दाय गोपीजनवल्लभाय स्वाहा। १८। ऊों नमो भगवते रुक्मिणीवल्लभाय स्वाहा। १६ क्लीं कृष्णाय नमः स्वाहा। ८। क्लीं गोवल्लभाय स्वाहा। ८। क्लीं कृष्ण क्लीं। एते कृष्णमन्त्राः। अथ सन्तानगोपालमन्त्रः। देवकीसुत गोविन्द वासुदेव जगत्पते। देहि मे तनयं कृष्ण त्वामहं शरणं गतः। कामदेवमन्त्रः। क्लीं। १। अथ कामगायत्री। कामदेवाय विद्महे पुष्पबाणाय धीमहि तन्नोऽनङ्गः प्रचोदयात्। २४। अथ श्रीदुर्गामन्त्रः। ऊों ह्रीं दुं दुर्गायै नमः। ८। अष्टलक्षं जपः। मधुराक्ततिलैर्होमः। अथ महिषमर्दिनीमन्त्रः। महिषमर्दिनि स्वाहा। ८। अष्टलक्षं जपः। तिलैर्होमः। अथाऽयं दुर्गामन्त्रः। ऊों दुर्गे दुर्गे रक्षिणिस्वाहा। पञ्चलक्षं जपः। घृतेन होमः। श्रीविन्ध्यवासिनीमन्त्रः। ऊों उतिष्ठपुरुषि किंसुपिषि भयं मे समुपस्थितम्। यदि शक्यमशक्यं वा तन्मे भगवति शमय स्वाहा।

अथ वागीश्वरीमन्त्रः। ह्रीं वद वद वाग्वादिनि स्वाहा ह्रीं। दशलक्षं जपः। कमलैःपयोभ्यक्ततिलैर्वा मधुराक्तैर्होमः। मन्त्रान्तरम्। ऐं नमो भगवति वद वद वाग्देवि स्वाहा। अष्टलक्षं जपः। घृताक्ततिलैर्होमः। अथ श्रीलक्ष्मीमन्त्रः। श्रीं १ द्वादशलक्षं जपः। मधुराक्तकमलैर्द्वादशसहस्रं होमः। मन्त्रान्तरम्। ऐं श्रीं ह्रीं क्लीं। ४ द्वादश लक्षं जपः। रक्तकमलैर्होमो द्वादश सहस्रम्। महालक्ष्मीमन्त्रः। ॐ ऐं ह्रीं श्रीं क्लीं ह्सौं जगत्प्रसूत्यै नमः। द्वादशलक्षं जपः। घृतैः श्रीफलैः कमलैरयुतद्वयं होमः। मन्त्रान्तरम्। नमः कमलवासिन्यै स्वाहा १० दश लक्षं जपः। मधुराक्तकमलैर्होमः। अथ भुवनेश्वरीमन्त्रः। ह्रीं १। द्वात्रिंशल्लक्षं जपः भुवनेश्वर्य्याः। ऐं ह्रीं श्रीं। वा आं ह्रीं क्रीं। अथ व्यासमन्त्रः। व्यां वेदव्यासाय नमः। अथ वेदव्यासमन्त्रः। व्यां वेदव्यासाय नमः ८ अथ शिवमन्त्रः। ॐ नमः शिवाय ६ वा नमः शिवाय ५ मृत्युञ्जयमन्त्रः। ॐ जूंसः। लक्षत्रयं जपः। अथ वैदिकमृत्युञ्जयमन्त्रः। ॐ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात्। अथ महामृत्युञ्जयमन्त्रः। ॐ हौं ॐ जूंसः भूर्भुवःस्वः त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् भूर्भुवः स्वरों जूंसः हौं ॐ।

T

केतोः। ओं फां फीं फौं सः केतुभ्यःस्वाहा। अथ मङ्गला-दियोगिनीमन्त्रः।मङ्गलामन्त्रः। ह्रीं मङ्गले मङ्गलायै स्वाहा। पिङ्गलायाः। ओं ग्लौं पिङ्गले वैरिकारिणि प्रसीद फट् स्वाहा। धन्यायाः। श्रीं धनदे धन्ये स्वाहा। भ्रामर्य्याः। ओं भ्रामरि जगतामधीश्वरि भ्रामरि क्लीं स्वाहा। भद्रिकायाः। ओं भद्रिके भद्रं देहि अभद्रं नाशय स्वाहा। उल्कायाः। ओं उल्के मम रोगं नाशय जम्भय स्वाहा। सिद्धायाः। ओं ह्रीं सिद्धे मे सर्वमानं संसाधय स्वाहा। सङ्कटायाः। ओं ह्रीं सङ्कटे मम रोगं नाशय स्वाहा। ८। अथ भूतलिपिः। पञ्चह्रस्वाः सन्धिवर्णा व्योमेशाग्निजलन्धराः। अन्त्यमाद्यं द्वितीयञ्च चतुर्थं मध्यमं क्रमात्॥ पञ्चवर्गाक्षराणि स्युर्वान्तः श्वेतेन्दुभिः सह। एषा भूतलिपिः प्रोक्ता द्विचत्वारिंशदक्षरैः॥ एवं जपं पुरा कृत्वा तेजोरूपं समर्प्पयेत्। देवस्य दक्षिणे हस्ते कुशपुष्पार्घवारिभिः॥ शक्तिपक्षे वामहस्ते भक्तिभावात्समर्प्पयेत्। ततो मन्त्रजपः कार्य्यः।भूतलिपिमन्त्रः। अ इ उ ऋ लृ ए ऐ ओ औ ह य व र ल ङ क ख घ ग ञ च छ झ ज ण ट ठ ढ ड न त थ ध द म प फ भ ब श ष स ४२। अथ गायत्रीलिख्यते। विष्णोः। त्रैलोक्यमोहनाय विद्महे कामदेवाय धीमहि। तन्नो विष्णुः प्रचोदयात्। गोपालस्य। कृष्णाय विद्महे दा-

T

मोदराय धीमहि। तन्नो विष्णुः प्रचोदयात्। कामदेवस्य। कामदेवाय विद्महे पुष्पबाणाय धीमहि। तन्नोऽनङ्गः प्रचोदयात्। रामस्य। दासरथये विद्महे सीतावल्लभाय धीमहि तन्नो रामः प्रचोदयात्॥ रुद्रस्य। तत्पुरुषाय विद्महे महादेवाय धीमहि तन्नो रुद्रः प्रचोदयात्। नारायणस्य। नारायणाय विद्महे वासुदेवाय धीमहि। तन्नो विष्णुः प्रचोदयात्। कार्त्तवीर्य्यगायत्री। कार्त्तवीर्य्याय विद्महे महावीर्य्याय धीमहि। तन्नोऽर्जुनः प्रचोदयात्। नृसिंहस्य। ओं नृसिंहाय विद्महे वज्रनखाय धीमहि। तन्नो नृसिंहः प्रचोदयात्। इति नृसिंहगायत्री। सूर्य्यस्य। आदित्याय विद्महे मार्त्तण्डाय धीमहि। तन्नः सूर्य्यः प्रचोदयात्। शक्तेः। सर्वसम्मोहिन्यै विद्महे विश्वजनन्यै धीमहि। तन्नः शक्तिः प्रचोदयात्। त्वरितायाः। त्वरितादेवि विद्महे नित्यायै धीमहि। तन्नो देवी प्रचोदयात्। बालायाः। ऐं वागीश्वर्य्यै विद्महे क्लीं कामेश्वरि धीमहि। सौः तन्नः शक्तिः प्रचोदयात्। त्रिपुरसुन्दर्य्याः। ऐं त्रिपुरादेवि विद्महे क्लीं कामेश्वरि धीमहि सौःतन्नःक्लिन्ने प्रचोदयात्। दुर्गायाः। रमादेव्यै विद्महे दुर्गायै धीमहि तन्नो दुर्गा प्रचोदयात्। महालक्ष्म्याः। महालक्ष्म्यै विद्महे महाश्रिये धीमहि। तन्नः श्रीः प्रचोदयात्। छिन्नमस्तायाः। वैरो.

चन्यै विद्महे छिन्नमस्तायै धीमहि तन्नो देवी प्रचोदयात् । कालिकायाः। कालिकायै विद्महे श्मशानवासिन्यै धीमहि तन्नो देवी प्रचोदयात् । अथ गायत्रीध्यानम् । उद्यदादित्यसङ्काशां पुस्तकाक्षकरां स्मरेत् । कृष्णाजिनधरां ब्राह्मीं ध्यायेत्ताराङ्कितेम्बरे ॥ मध्याह्ने ॥ श्यामवर्णाञ्चतुर्बाहुं शङ्खचक्रलसत्कराम् । गदापद्मधरां देवीं सूर्य्यासनकृताश्रयाम् ॥ सायाह्ने ॥ शुक्लां शुक्लाम्बरधरां वृषासनकृताश्रयाम् । त्रिनेत्रां वरदं पाशं शूलं नरकरोटिकाम् ॥ सूर्य्यमण्डलमध्यस्थां ध्यायन्देवीं समभ्यसेत् । अथ यन्त्रलेखनसिध्यर्थं स्वर्णाकर्षणभैरवमन्त्रः ॥ ओं ऐं क्लीं क्लीं क्लूं ह्रां ह्रीं ह्रूं सः हं आपदुद्धारणाय अजामलबद्धाय लोकेश्वराय स्वर्णाकर्षणभैरवाय मम दारिद्र्यविद्वेषणाय ॥ ओं श्रीं महाभैरवाय नमः । अस्य स्वर्णाकर्षणभैरवमन्त्रस्य चतुर्मुखो मुनिः । पङ्क्तिच्छन्दः स्वर्णाकर्षणभैरवो देवता दारिद्र्यनिवृत्तये जपे विनियोगः ॥ ६ ॥ ॥ ८ ॥ १२ ॥ ७ ॥ १० ॥ १० ॥ एभिर्वर्णैः षडङ्गन्यासः । अथ ध्यानम् । पारिजातद्रुकान्तारस्थिते माणिक्यमण्डपे। सिंहासनगतं ध्यायेद्भैरवं स्वर्णदायिनम् । गाङ्गेयपात्रं डमरुं त्रिशूलं वरं करैः सन्दधतं त्रिनेत्रम् ॥ देव्यायुतं तप्तसुवर्णवर्णं स्वर्णाकृषं भैरवमाश्रयामः ॥ लक्षं जपः । पा-

यसेन होमः ॥ शैवे पीठे अङ्गदिक्पालहेतिभिर्य्यजेत् । सिद्धं मनुं जपेन्नित्यन्त्रिशतं मण्डलावधि । दारिद्र्यं दूरमुत्क्षिप्य जायते धनदोपमः॥जपादिभिर्म्मनौ सिद्धे यन्त्रौघः सिद्धिमाप्नुयात् । सुवर्णमेधते गेहे नैवारेः स्यात्पराभव इति । अथ हनुमन्मालामन्त्रः । ओं ऐं श्रीं ह्रां ह्रीं ह्रूं ह्स्फ्रें ख्फ्रें ह्स्रौं ह्स्ख्फ्रें ह्सौं ओं नमो हनुमते प्रकटपराक्रम आक्रान्तदिङ्मण्डल यशोवितानधवलीकृत जगत्रितय वज्रदेह ज्वलदग्निसूर्य्यकोटिसमप्रभ तनूरुह रुद्रावतार लङ्कापुरीदहनोदधिलङ्घन दशग्रीवशिरोऽन्तक कृतसीताश्वासन वायुसुताञ्जनीगर्भसम्भूतश्रीरामलक्ष्मणानन्दकर कपिसैन्यप्राकार सुग्रीवसख्यकारण वालिनिबर्हणकारण द्रोणपर्वतोत्पाटकाशोकवनविदारणाक्षकुमारच्छेदन वनरक्षाकरसमूहविभञ्जन ब्रह्मास्त्रब्रह्मशक्तिग्रसन लक्ष्मणशक्तिभेदनिवारण विशल्यौषधिसमानयन बालोदितभानुमण्डलग्रसन मेघनादहोमविध्वंसन इन्द्रजिद्वधकारण सीतारक्षकराक्षसीसङ्घविदारण कुम्भकर्णादिवधपरायण श्रीरामभक्तितत्पर समुद्रव्योमद्रुमलङ्घन महासामर्थ्य महातेजः पुञ्जविराजमान स्वामिवचनसम्पादितार्जुनसंयुगसहाय कुमारब्रह्मचारिन् गम्भीरशब्दोदयदक्षिणाशामार्त्तण्ड मेरुपर्वतपीठिकार्च्चन सकल-

मन्त्रागमाचार्य्य मम सर्वग्रहविनाशन सर्वज्वरोच्चाटन सर्वविषनाशन सर्वापत्तिनिवारण सर्वदुष्टनिबर्हण सर्वं-व्याघ्रादिभयनिवारण। सर्वशत्रूच्छेदन मम परस्परात्रिभुवनपुंस्त्रीनपुंसकात्मकं सर्वजीवजातं वशय २ ममाज्ञाकारकं सम्पादय २ नानानामधेयान् सर्वान् राज्ञः सपरिवारान् मम सेवकान् कुरु कुरु सर्वशस्त्रास्त्रविषाणि विध्वंसय २ ह्रां ह्रीं हूं हां एह्येहि ह्सौं ह्स्ख्फ्रें ह्सौं ख्फ्रें ह्स् फ्रें सर्वशत्रून् हन २ परबलानि परसैन्यानि क्षोभय २ मम सर्वकार्य्यजातं साधय २ सर्वदुष्टदुर्ज्जनमुखानि कीलय कीलय घे ३ हा३हुं३फट् ३ स्वाहा ५ ८८ श्रीहनुमतो मालामन्त्रोयम् ॥ अथ मन्त्रग्रहणविधिः। प्रथमतः स्वस्तिवाचनं कृत्वा शिष्यः सङ्कल्पङ्कुर्य्यात्। कुशत्रयतिलयवजलान्यादाय। ओं अद्यामुके मास्यमुके पक्षेऽमुकतिथावमुकगोत्राऽमुकशर्म्मा पूर्वजन्मोपार्ज्जितज्ञानाज्ञानकृतसकलपापक्षयपूर्वकसर्वजनाह्लादकत्वविमलबुद्धिपुत्रपौत्रधनधान्यकल्याणनानाविधकवित्वसकलशास्त्रबोधसुखसौमनस्यस्वेष्टमन्त्र सिद्धिकामनया श्रीमदमुकदेवतामुकमन्त्रग्रहणाङ्गभूतगणपत्यादिपञ्चदेवतादशदिक्पालनवग्रहपूजनपूर्वककलशस्थापनमहङ्करिष्ये।इति सङ्कल्पं कृत्वा वेद्युपरि धान्यराशौ प.

श्वपल्लवपञ्चरत्नौषधियुक्तं श्रीकलशं स्थापयेत् ॥ तत्र पञ्च पल्लवाः । चूताश्वत्थन्यग्रोधोदुम्बरप्लक्षाः । पञ्च रत्नम् ॥ कनकं १ कुलिशं २ नीलं ३ पद्मरागं ४ च मौक्तिकम् ।५। सप्तमृत्तिकाः । अश्वस्थानाद्गजस्थानाद् बल्मीकात्सङ्गमाद्-ह्रदात् । राजद्वाराद्गोकुलाच्च मृदमानीय निःक्षिपेत् ॥ सप्त-धान्यानि ॥ व्रीहयो १ यव २ गोधूमा ३ माष ४ मुद्ग ५ प्रियङ्गवः । ६ श्यामाकं । ७ । सप्तमं प्रोक्तमित्येवं धान्य-सप्तकम् ॥ तत्र स्थापनमन्त्राः । तत्रादौ भूमिस्पर्शमन्त्राः । ओं भूरसि भूमिरस्यदितिरसि विष्वधाया विश्वस्य भुव. नस्य धर्त्री पृथिवीं यच्छ पृथिवीं दृ ँह पृथिवीमाहि ँ सीः । इति भूमिस्पर्शः । अथ गोमयस्पर्शः । ओं मान-स्तोके तनये मान आयुषि मानो गोषुमानोऽश्वेषुरीरि-षः । मानोवीरान् रुद्रभामिनोऽवधीर्हविष्मन्तः सदमि-त्वाहवामहे । इति गोमयमन्त्रः । ओं धान्यमसि धिनुहि देवान्प्राणाय त्वोदानायत्वा व्यानायत्वा दीर्घामनु प्रसीति मायुषेधान्देवो वः सविता हिरण्यपाणिः प्रतिगृह्णात्वच्छिद्रेण पाणिना चक्षुषे त्वामहीनां पयोसि । इति मन्त्रेण धान्यपुञ्जे कलशं स्थापयेत् । अथ कलश-स्पर्शः । ओं आजिघ्रकलशं मह्यात्वाविशन्त्विन्दवः । पुन. रूर्ज्जानिवर्त्तस्व शानः सहस्रं धुक्ष्वोरुधारापयस्वती पु-

नर्म्माविशताद्रयिः। इति कलशस्पर्शः। अथ कलशे जलं दद्यात्। ओं वरुणस्योत्तम्भनमसि वरुणस्य स्कम्भसर्ज्जनीस्थो वरुणस्य ऋतसदन्यसि वरुणस्य। ऋतसदनमसि वरुणस्य ऋतसदनमासीत्। इति जलं दद्यात्। अथ कलशकण्ठे वस्त्रधारणम्। वसोः पवित्रम, सि शतधारं वसोः पत्र मसि सहस्रधारम्। देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुपूत्वा कामधुक्षः। इति मन्त्रेण वस्त्रं दद्यात्। अथ पूगीफलं दद्यात्। ओं याःफलि नीर्य्या अफला अपुष्पा याश्च पुष्पिणीः। बृहस्पति प्रसूतास्तानोमुञ्चं त्व ँ हसः। इति पूगीफलम्। अथ स्वर्णादिकम्। ओं हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत्। सदाधारपृथिवीं द्यामुते मां कस्मै देवाय हविषाविधेम। इति स्वर्णादिकं दद्यात्। अथ पञ्च रत्नम्। कनकं कुलिशं नीलं ३ पद्मरागञ्च४ मौक्तिकम्५। एतानि पञ्च रत्नानि कलशे प्रक्षिपेद्बुधः। ओं परिवाजपतिः कविरग्निर्हव्यान्यक्रमात्। दधद्रत्नानि दाशुषे। इति पञ्च रत्नं दद्यात्। अथाम्रपल्लवदानम्। ओं अश्वत्थे वो निषदनं पर्णे वो वसथ कृता। गोभाजइत्किला सथयत्सनवथपुरुषम्। ओं अम्बे अम्बिके अम्बालिके नमानयति कश्चन। ससस्त्यः

T

सुकः सुभाद्रिकां कां पीलवासिनीम् । इति मन्त्रद्वयेनाम्र-
पल्लवं दद्यात् । अथ सर्वौषधीदानम् । ओं या ओषधीः
पूर्वा जाता देवेभ्यस्त्रियुगं पुरा मनैनुवभ्रूणामह ँ शतं धा-
मानि सप्त च । इति सर्वौषधीदानम् । अथ सप्तमृत्तिका-
दानम् । स्योना पृथिवी नो भवान्नृक्षरानिवेशनी । य-
च्छानः शर्म्मसप्रथाः । इति सप्तमृत्तिकाः । अथ दूर्वादा-
नम् । काण्डात्काण्डात्प्ररोहन्तीपरुषः परुषस्परि । एवा-
नोदूर्वे प्रतनुसहस्रेण शतेन च । इति दूर्वा । ततो गन्धं
दद्यात् । गन्धद्वारां दुराधर्षां नित्यपुष्टां करिषिणीम् । इश्व-
रीं सर्वभूतानान्तामिहोपह्वये श्रियम् । इति गन्धं दद्यात् ।
अथ तण्डुलपूर्णपात्रस्थापनम् । ओं पूर्णा दर्वी परापत सु-
पूर्णा पुनरापत । वस्नेवविक्रीणावहाइषमूर्ज्जं ँ शतक्रतो
इति पूर्णपात्रं कलशोपरि स्थापयेत् । अथ दीपं न्यसेत् ।
ओं अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा सूर्य्यो ज्योति-
र्ज्योतिः सूर्य्यः स्वाहा अग्निर्वर्च्चो ज्योतिर्वर्च्चः स्वाहा
सूर्य्यो वर्च्चो ज्योतिर्वर्च्चः स्वाहा ज्योतिः सूर्य्यः सूर्य्यो
ज्योतिः स्वाहा । इति दीपं न्यसेत् । अथ कलशप्रतिष्ठा ।
ओं मनोजूतिर्ज्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनो-
त्वरिष्टं यज्ञ ँ समिदन्दधातु । विश्वेदेवा स इह मादय-
न्तामोंप्रतिष्ठ ३ इति कलशप्राणप्रतिष्ठां कृत्वा तत्र क-

लशे स्वस्वमन्त्रेण गणेशवरुणौ पूजयेत्। ततो ब्रह्मन्निहागच्छ इहतिष्ठेत्यावाह्य पञ्चोपचारैः सम्पूजयेत्। ततो गुरुं पूजयेत्। ततः शङ्खस्थापनं कुर्य्यात्। तद्यथा। स्ववामभागे त्रिकोणं विलिख्य। ओं ीं आधारशक्त्ये नम इति सम्पूज्य तत्राधारं संस्थाप्य मम इति सम्पूज्य त्रिकोणं शुद्धोदकेनाभ्युक्ष्य मन्दशकलात्मने वह्निमण्डलाय नम इति गन्धपुष्पाक्षतैरर्घ्यपात्रं सम्पूज्य श्रीमदमुकदेवतार्घ्यपात्रं स्थापयामीति संस्थाप्य। अं अर्कमण्डलाय द्वादशकलात्मने अर्घ्यपात्राय नम इति सम्पूज्य मूलं विलोममातृकाञ्च पठन् क्षं ह्रं सं षं शं वं लं रं यं मं भं बं फं पं नं धं दं थं तं णं ढं डं ठं टं ञं झं जं छं चं ङं घं गं खं कं अः अं औं ओं ऐं एं लृं लं ॠं ऋं ऊं उं ईं इं आं अं शुद्धोदकैरर्घ्यपात्रमापूर्य्य सं सोममण्डलाय षोडशकलात्मने नम इति सम्पूज्य ओं गङ्गे चेति क्रोमित्यङ्कुशमुद्रया तीर्थान्यावाह्य फडिति संरक्ष्य हुमित्यवगुण्ठ्य शमिति शङ्खमुद्रां वमिति धेनुमुद्रां प्रदर्श्य मत्स्यमुद्रया आच्छाद्य मूलमष्टधा प्रजप्य तेनोदकेनात्मानं

[ १ ] श्रीकृष्णदत्तः।

गणेशमन्त्रः। गणानान्त्वेत्यादि। वा। नमो गणेभ्य इत्यादि। वरुणमन्त्रः। वरुणस्योत्तम्भेत्यादि। वा। इमं मे वरुणश्रुधीत्यादि।

पूजोपकरणं च सिञ्चयेत् । ततः कुशण्डिकां कृत्वा होमं कृत्वा सङ्कल्पं कुर्यात्॥शिष्यः कुशत्रययवजलान्यादाय। ओं अद्येत्याद्यमुकगोत्रोमुकशर्म्मा पूर्वजन्मोपार्जितसकलपापक्षयपूर्वकसर्वजनाह्लादकत्वविमलबुद्धिपुत्रपौत्रधनकल्याणनानाविधकवित्वसर्वशास्त्रबोधसुखसौमनस्यप्राप्तिकामनया श्रीमदमुकदेवताऽमुकमन्त्रग्रहणमहङ्करिष्ये। इति सङ्कल्पं कृत्वा श्रीगुरुवरणं कुर्य्यात् । अद्येत्यादि अमुकगोत्रममुकशर्माणं ब्राह्मणमेभिः पुष्पचन्दनाक्षतयज्ञोपवीतताम्बूलवासोयुगलालङ्कारैर्गुरुत्वेन त्वामहं वृणे। वृतोस्मीति प्रतिवचनम्। यथाविहितं कर्म्म कुरु॥ करवाणि। ततः शङ्खदूर्वाक्षतचन्दनानि शिष्यशिरसि धृत्वा मातृकान्यासं विधाय मूलमन्त्रं मनसा प्रजपन् अभिषिञ्चेत्। ततः शिष्यः कृतभूतशुद्धिमातृकान्यासः। ततो गुरुः शिष्यदेहे कलान्यासं कुर्य्यात्। तद्यथा। पादतलाज्जानुपर्य्यन्तं ओं निवृत्त्यै नमः। जानुनोर्नाभिपर्य्यन्तं ओं प्रतिष्ठायै नमः। नाभेराकण्ठं ओं विद्यायै नमः। कण्ठादाललाटं ओं शान्त्यै नमः। ललाटाद्ब्रह्मरन्ध्रान्तं ओं शान्त्यतीतायै नमः। पुनर्ब्रह्मरन्ध्राद्याललाटं ओं शान्त्यतीतायै नमः। ललाटादाकण्ठं ओं शान्त्यै नमः। कण्ठान्नाभिपर्य्यन्तं ओं विद्यायै नमः।

नाभेर्जानुपर्य्यन्तं ओं प्रतिष्ठायै नमः । जानुनोः पादपर्य्यं तं ओं निवृत्यै नमः । ततः शिष्यः शिरसि मूलं प्रजप्य पुनः शिष्यशिरसि हस्तं दत्वा अष्टोत्तरशतमन्त्रं प्रजप्य मन्त्रमुदकपूर्वकं दद्यात् । आवयोस्तुल्यफलदो भवतु इत्यनेन ततो ददस्वेति शिष्यो ब्रूयात् । तदा दक्षकर्णे स्त्रियो वामकर्णे गुरुः त्रिवारं मन्त्रं दद्यात् । ततः शिष्यः शतधा अष्टधा वा मन्त्रं जपेत् । गुरुमन्त्रदेवतानामैक्यं सम्भावयन् गुरुचरणे दण्डवत्प्रणमेत् । ततो गुरुर्व्वदेत् । उत्तिष्ठ वत्स मुक्तोसि सम्यगाचारवान्भव कीर्त्तिः श्रीकान्तिरतुला बलारोग्यं सदास्तु ते इति शिष्यं गुरुरुत्थापयेत् । ततः शिष्यः सकुशतिलजलान्यादाय ओं अद्यकृतैतदमुकमन्त्रग्रहणप्रतिष्ठार्थमिदं स्वर्णममुकगोत्रायामुकशर्म्मणे गुरवे दक्षिणां तुभ्यमहं सम्प्रददे शरीरमर्थं प्राणांश्च सर्वं तस्मै निवेदयेत् । ततो ब्राह्मणेभ्यो यथा शक्तिदक्षिणां दद्यादिति मन्त्रग्रहणविधिः ॥

अथ चतुर्थदिवसे रात्रौ चतुर्थीकर्म्म कुर्य्यात् । तद्यथा । तत्र शिष्यः कृतभूतशुद्धिप्राणायामः अष्टदलपद्मे कलशं संस्थाप्य पञ्चदेवताविष्णुपूजां कृत्वा कुशत्रयतिलजलान्यादाय सङ्कल्पं कुर्य्यात् । ओं अद्येत्याद्यमुकगोत्रोऽमुकशर्म्मामुकदेवतामुकमन्त्रग्रहणाङ्गहोमकर्मादिकृताकृ-

तावेक्षणरूपममुकगोत्रममुकशर्म्माणं ब्राह्मणमेभिः पुष्पचन्दनताम्बूलाक्षतयज्ञसूत्रद्रव्यवासोभिर्होतृत्वेन त्वामहं वृणे इति वरणं दत्वा होमं कुर्य्यात्। तद्यथा। तत्रादौ कुण्डं स्थण्डिलं वा हस्तमात्रं कृत्वा कुण्डस्यैशान्यां दिशि स्थापितघटे स्वेष्टदेवतामावाह्य पूजयेत्। ततः कुण्डं स्थण्डिलं वा मूलेन निरीक्ष्य फडिति सन्ताड्य पुनः फडिति प्रोक्ष्य हुं कारेणाभ्युक्षणं कुर्य्यात्। ततो मूलमुच्चार्य्य कुण्डाय नमः स्थण्डिलाय नमो वेति गन्धपुष्पाभ्यां सम्पूज्य होमवेद्यां प्रागग्रा उदगग्राश्च तिस्रो रेखाः कार्य्याः। प्रागग्ररेखासु ओं मुकुन्दाय नमः। ओं ईशानाय नमः ओं पुरन्दराय नमः। उदगग्ररेखासु ओं ब्रह्मणे नमः। ओं वैवस्वताय नमः। ओं इन्दवे नमः। इति प्रादक्षिण्येन गन्धपुष्पाभ्यां पूजयेत्। त्रिपुरसुन्दरीपक्षे तु। ऐं ह्रीं श्रीं ऐं क्लीं सौः मुकुन्दाय नमः। ऐं ह्रीं श्रीं ऐं क्लीं सौं ईशानाय नमः। इत्यादिक्रमेण षट्सु रेखासु पूजयेत्। ततो होमयन्त्रं कुण्डमध्ये स्थण्डिलं वा त्रिकोणं तद्बहिर्वृत्तमष्टदलं ततश्चतुर्द्वारयुक्तं भूमन्दिरं विलिख्य तदुपरि मूलेन पुष्पाञ्जलिं दद्यात्। सुन्दरीपक्षे। ऐं क्लीं सौः इति पुष्पाञ्जलिं दद्यात्। ततो होमद्रव्यं प्रणवेनाभ्युक्ष्य वह्नियोगपीठमर्च्चयेत्। यथा यन्त्रमध्ये ओं आधारशक्तये

नमः।एवं प्रकृत्यै कूर्म्माय अनन्ताय पृथिव्यै क्षीरसमुद्राय श्वेतद्वीपाय मणिमण्डपाय कल्पवृक्षाय मणिवेदिकायै रत्न-सिंहासनाय। ततोऽग्न्यादिकोणचतुष्टयेषु धर्म्माय ज्ञानाय वैराग्याय ऐश्वर्य्याय।पूर्वादिचतुर्दिक्षु अधर्म्माय अज्ञाना-य अवैराग्याय अनैश्वर्य्याय प्रणवादिनमोन्तेन पूजयेत्। मध्ये अँ अनन्ताय पं पद्माय अँ सूर्य्यमण्डलाय द्वादश-कलात्मने नमः। ओं सोममण्डलाय षोडशकलात्मने नमः। मं वह्निमण्डलाय दशकलात्मने नमः। ततः पूर्वा-दिकेसरेषु मध्ये च ओं पीतायै ओं श्वेतायै। ओं अरु-णायै। ओं कृष्णायै। ओं धूम्रायै। ओं तीव्रायै। ओं स्फु-लिङ्गिन्यै। ओं रुचिरायै। ओं ज्वालिन्यै नमः। इति पूजयेत्। मध्ये रत्नासनाय इति पूजयेत्। ततो वागीश्वरीं ध्यायेत्। वागीश्वरीमृतुस्नातां नीलेन्दीवरलोचनाम्। वागीश्वरेण संयुक्तां ध्यात्वा। वागीश्वरवागीश्वरीभ्यां नमः। इति मन्त्रेण पञ्चोपचारैः सम्पूजयेत्। सुन्दरीपक्षे तु कामे-श्वरीं ध्यात्वा पूजयेत्। ततः सूर्य्यकान्तादिसम्भूतं श्रोत्रि-यगेहजं वा वह्निमानीय वह्निं वषडन्तेन मूलेनावलोकये-त्। फट्कारेणावाहयेत्। ततः ओं वह्नेर्य्योगपीठाय नमः। इति सम्पूज्य चतुर्दिक्षु ओं वामायै नमः। ओं ज्येष्ठायै नमः। ओं रौद्र्यै नमः ओं अम्बिकायै नमः इति पूजयेत्।

ततो मूलमुच्चार्य अमुकदेवताकुण्डाय नमः। स्थण्डिलाय नमो वेति सम्पूज्य वागीश्वरीं तत्तद्देवतारूपामृतुमतीं ध्यायेत्। सुन्दरीपक्षे कामेश्वरीम्। ततो रमित्युच्चार्य्य तस्मात्किञ्चिद् वह्निं समुद्धृत्य मूलं हूं फट् क्रव्यादिभ्यः स्वाहा। इति क्रव्यादांशम्। नैर्ऋतिकोणे त्यजेत्। ततो मूलेन वीक्षणं कृत्वा फडिति ताडनं फडिति प्रोक्षणम्। हुं कारेणाभ्युक्षणं फट् कारेणास्त्रमुद्रया संरक्षणम्। हुमित्यवगुण्ठ्य धेनुमुद्रयाऽमृतीकृत्य वह्निपात्रं बाहुभ्यामुद्धृत्य कुण्डोपरि त्रिःपरिभ्राम्य जानुस्पृष्टमहीतले शिववीर्यबुद्ध्या देव्यायोनावात्मनोभिमुखं कुण्डे निःक्षिपेत्। ततो ह्रीं वह्निमूर्त्तये नम इति सम्पूज्य रं वह्निचैतन्याय नमः। इति वह्नौ चैतन्यं संयोज्य। ओं चित्पिङ्गलहन २ दह २ पच २ सर्वज्ञाज्ञापय स्वाहा। इति मन्त्रेणाग्निं ज्वालयेत्। ततः अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम्। सुवर्णवर्णममलं समिद्धं विश्वतोमुखमित्यग्निमुपतिष्ठेत्। अग्नेत्वममुकदेवतानामासि इति नामकरणं कृत्वा सम्पूज्य। ओं वैश्वानरजातवेद इहावह लोहिताक्ष सर्वकर्म्माणि साधय स्वाहा। इति पुष्पाञ्जलिं दद्यात्। तत एते गन्धपुष्पे ओं अग्नेर्हिरण्यादिसप्तजिह्वाभ्यो नमः। एवं सहस्रार्च्चिषे हृदयाय नमः। इत्यग्निषड-

ङ्गेभ्यो नमः। ओं अग्नये जातवेदसे इत्याद्यग्न्यष्टमूर्तिभ्यो नमः एवं ब्राह्म्याद्यष्टशक्तिभ्यो नमः।एवं पद्माद्यष्टनिधिभ्यो नमः। एवं इन्द्रादिदशदिक्पालेभ्यो नमः। ओं वज्राद्यस्त्रेभ्यो नम इति पूजयेत्। ततः प्रादेशमात्रं कुशद्वयं घृतमध्ये निःक्षिप्य वामदक्षिणमध्यभागेषु। इडां पिङ्गलां सुषुम्णां ध्यात्वा होमं कुर्य्यात्। मूलात्षड्गुलं त्यक्त्वा चतुरङ्गुलमेव च।त्रकोष्ठे मूलमाच्छाद्य धारयेच्छङ्खमुद्रया॥हीयते यजमानो वै स्रुवमूलस्य दर्शनात्। तस्मात्सगोपयेन्मूलं होमकाले स्रुवस्य च। अग्रे व्याधिकरं प्रोक्तं मध्ये शोककरं मतम्। मूले हानिकरं प्रोक्तं स्रुवं सन्धारयेत्कथम्। वेदाङ्गुलं परित्यज्य अग्रे च बहिरष्टकम्।वेदाङ्गुलन्तु तन्मध्ये धारयेच्छङ्खमुद्रया। यथा स्रुवेण दक्षिणभागादाज्यं गृहीत्वा ऊों अग्नये स्वहा। इत्यग्निदाक्षिणनेत्रे जुहुयात्। ततो वामभागादाज्यं गृहीत्व। ऊों सोमाय स्वाहा इति वामनेत्रे जुहुयात्। ततो मध्यभागादाज्यं गृहीत्वा। ऊों अग्निसोमाभ्यां स्वाहा। इति ललाटे जुहुयात्। पुनर्द्दक्षिणतो घृतं गृहीत्वा। ऊों अग्नये स्विष्टकृते स्वाहा इत्यग्निमुखे जुहुयात्। ततो व्याहृतिहोमः। ऊों भूः स्वाहा। ऊों भुवः स्वाहा। ऊो स्वः स्वाहा। ऊों वैश्वानर जात वेद इहावहलोहिताक्ष सर्व्वकर्म्माणि साधय स्वाहा।

इति मन्त्रेण वारत्रयं जुहुयात्। ततोऽग्नौ। ॐ पीठदेवताभ्यो नमः। इति गन्धपुष्पाभ्यां सम्पूज्य देवतामुखे मूलमन्त्रेण पञ्चविंशतिवारं जुहुयात्। पुनर्मूलमन्त्रेण एकादशवारं हुत्वा सङ्कल्पं कुर्य्यात्। अद्येत्यादिअमुकगोत्रः श्रीअमुकदेवशर्म्मा स्वेष्टदेवताप्रीतिकामः अमुकमन्त्रेणामुकद्रव्यैरष्टोत्तरशतपरिमितहोमकर्म्माहं करिष्ये। ततो यथासङ्ख्याकं होमं कृत्वा मूलमुच्चार्य्य स्वाहेत्यनेन होमं समाप्यावरणदेवतानामाहुतिं दत्वा मूलेन पूर्णाहुतिं दद्यात्। ततःसंहारमुद्रया देवतां स्वहृदयमानीय क्षमस्वेति विसर्ज्य दक्षिणान्दद्यात्। अद्येत्यादिकृतैतदमुकदेवतादीक्षाङ्गहोमकर्म्मणः प्रतिष्ठार्थं दक्षिणामिदं काञ्चनं स्वेष्टदेवतायै दातुमहमुत्सृजेरिति दक्षिणां कृत्वा गुरवे दद्यात्। तत ऐशान्यां दिशि दधि क्षिप्त्वा वसुधे त्वं शीतला भवेति निवेदयेत्। ततः स्रुवलग्नं भस्मं ललाटादिषु धारयेत्। ततो ब्राह्मणभोजनम्। वस्त्राभरणादिभिः स्वगुरुं सन्तोषयेदिति संक्षेपदीक्षाप्रकारः समाप्तः। श्रीरस्तु शुभमस्तु। अथ धारणयन्त्रसंस्कारविधिः। स्वस्वकल्पोक्तद्रव्येण यन्त्रं विलिख्य पट्टसूत्रेण तन्तुना वा संवेष्ट्य पञ्चगव्येन प्रक्षाल्य पञ्चामृतेन च प्रक्षाल्य गन्धोदकेन प्रक्षालनं कुर्य्यात्। ततो यन्त्रराजाय विद्महे महा-

यन्त्राय धीमहि तन्नो यन्त्रः प्रचोदयादिति गायत्र्या अष्टोत्तरशतं यन्त्रमभिमन्त्रयेत् । ततो यन्त्रदेवता पीठत्वेन यन्त्रं ध्यात्वा पात्रे संस्थाप्य तदुपरि स्वेष्टमावाह्य सम्पूज्य मूलमष्टोत्तरसहस्रं चाष्टोत्तरशतं वा प्रजपेत् । ततो होमं कृत्वा होमसम्पाताज्यं यन्त्रे दत्वा होमं समाप्य दक्षिणां दद्यात् । होमाशक्तौ द्विगुणादिजपं कुर्य्यात् । ततः स्वर्णादिबद्धं यन्त्रं शुभदिने विधाय तदुपरि प्राणप्रतिष्ठामन्त्रेण आं ह्रीं क्रोमित्यादिना प्राणप्रतिष्ठां कृत्वा कण्ठादिषु धारयेदिति यन्त्रप्रतिष्ठाविधिः ॥ अथ मालासंस्कारः । तन्नित्यता यामले ॥ अप्रतिष्ठितमालाभिर्म्मन्त्रं जपति यो नरः । तत्सर्वं निष्फलं विद्यात्क्रुद्धा भवति देवता ॥ सनत्कुमारीये । कार्पाससम्भवं सूत्रं धर्म्मकामार्थमोक्षदम् । तच्च विप्रेन्द्रकन्याभिर्न्निर्म्मितञ्च सुशोभनम् ॥ तच्च शक्तिविषयं रक्तम् । वैष्णवं पीतम् । शैवे श्वेतं ग्राह्यम् । तत्कृत्यमाह । त्रिगुणं त्रिगुणीकृत्य ग्रन्थयेच्छिल्पशास्त्रतः । एकैकं मातृकावर्णं सतारं प्रजपन् सुधीः ॥ मणिमादाय सूत्रेण ग्रन्थयेन्मध्यमध्यतः । ब्रह्मग्रन्थिं विधायेत्थं मेरुञ्च ग्रन्थिसंयुतम् ॥ अश्वत्थपत्रनवकैः पद्माकारन्तु कल्पयेत् । तन्मध्ये स्थापयेन्मालां मातृकां मूलमुच्चरन् ॥ क्षालयेत्पञ्चगव्येन सद्यो जातेन

सज्जलैः। चन्दनागुरुगन्धाद्यैर्वामदेवेन घर्षयेत्॥ धूपये-त्तामघोरेण तत्पुरुषेण लेपयेत्। मन्त्रयेत्पञ्चमेनैव प्रत्ये-कं तु शत शतमिति॥ अथ प्रथमतः त्रिगुणं त्रिगुणी-कृत्य मालां ग्रन्थयेत्। सप्रणवमातृकावर्णां प्रजपन् मणि मादाय एकस्य मुखे द्वितीयस्य मुखं संयोज्य तस्य पु-च्छे द्वितीयस्य पुच्छं कृत्वा नवतन्तुकगुणेन ग्रन्थये-त्। ताङ्गोपुच्छाकारां वा सर्प्पाकारां निर्म्माय नवाश्वत्थ-पत्रपद्मे संस्थाप्य सङ्कल्पं कुर्य्यात्। ओं अद्येत्याद्यमुक-गोत्रोमुकशर्म्मा स्वेष्टमन्त्रसिद्धिकामोऽमुकदेवतामाला-संस्कारमहं करिष्ये। तदङ्गतया गणपत्यादिपूजनमहं क-रिष्ये॥ ततः समूलमातृकामुच्चरन् पुटकस्थायां माला-यां पञ्चगव्यं क्षिपेत्। मूलं अं मूलं आमूलमित्यादिना। ततः सद्यो जातमन्त्रेण स्वच्छजलैः क्षालयेत्। मन्त्रस्तु। ऊों सद्यो जातं प्रपद्यामि सद्योजाताय वै नमः। भवे भवे नातिभवे भवस्व मां भवोद्भवाय नमः। ततो वामदेवम-

श्रीकृष्णदत्तः।

(१) आदौ स्थूलं ततो यथोत्तरमणुः। एवं भूता माला सर्प्पाकारा। तथा प्रथमापेक्षयापि स्थूलं मेराविति। तथान्यदपि पञ्चरात्रे। वामेन न स्पृ-शेन्मालां न स्पृशेत्तामदीक्षितः। भूमौ न विन्यसेन्मालां नान्यन्मन्त्रं जपेत्तथा॥ येन मनुना मालायाः संस्कारादिकं कृतं तदतिरिक्तमन्यत्। परञ्चात्रे गायत्र्या संस्कारादिक्रियायुतायां मालायां मन्त्रान्तरजपे दोषो न स्यात्। तत्रैव गायत्र्याः सर्वमन्त्रमयत्वप्रतिपादनात्।

न्त्रेण गन्धाद्यैर्लेपयेत्। मन्त्रस्तु। ऊँ वामदेवाय नमो ज्येष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः। ततोऽघोरमन्त्रेण तान्धूपयेत्। मन्त्रस्तु। ऊँ अघोरेभ्योथ घोरेभ्योऽघोरघोरतरेभ्यः। सर्वेभ्यः सर्वसर्वेभ्यो नमस्तेस्तु रुद्ररूपेभ्यः। ततः तत्पुरुषमन्त्रेण लेपयेत्। मन्त्रस्तु। ऊँ तत्पुरुषाय विद्महे महादेवाय धीमहि। तन्नो रुद्रः प्रचोदयात्। ततः पञ्चममन्त्रेण प्रत्येकं मणिं शतं शतं मन्त्रयेत्। मेरुमपि मन्त्रयेत्। पञ्चममन्त्रस्तु। ऊँ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मा शिवो मेऽस्तु सदा शिवोम्। प्रत्येकं तु सकृद्वा वा समुदायमालामाधिकृत्य तेन पञ्चममन्त्रेण मालायां शतवारं जपं कुर्य्यात्। ततो मालायामावाहनाष्टमुद्राप्रदर्शनपुरः सरं देवतामावाह्य मूलेन तां सम्पूज्य मालायाः प्राणप्रतिष्ठां कुर्य्यात्। आं ह्रीं क्रों यं रं लं वं शं षं सं हीं ऊँ क्षं सं हं सः ह्रीं ऊँ हं सः। अमुकदेवतामालायाः प्राणा इह प्राणाः आमित्यादि २० अमुकदेवतामालायाः सर्वेन्द्रियाणि आमित्यादि २० अमुकदेवतामालाया वाङ्मनश्चक्षुः श्रोत्रघ्राणप्राणा इहागत्य सुखं चिरन्तिष्ठन्तु स्वाहा। ऊँ क्षं सं हं सः ह्रीं ऊँ

इति मन्त्रेण प्राणप्रतिष्ठां विधाय व्युत्क्रमरीत्या प्रत्येकं माणिं स्पृशन् मूलमन्त्रं सकृज्जपेत् । सविन्दुमेकैक. मातृकावर्णञ्च जपेत् । ततः संस्कृतवह्नावष्टोत्तरशत-परिमितहोमं कृत्वा सम्पाताज्यं मालायां क्षिपेत् । होमाशक्तो षोडशोत्तरशतद्वयसङ्ख्याकजपं तया मालया कृत्वा मूलेन तां पूजयित्वाञ्जलिं बध्वा मन्त्रं पठेत् । त्वं माले सर्वलोकानां सर्वसिद्धिप्रदा मता । तेन सत्येन मे सिद्धिं देहि मातर्न्नमोस्तु ते । इति प्रणम्य देवताविसर्ज्जनं कुर्य्यात्।ततः कस्तूरी कुङ्कुमादिना सुवासितां मालां कृत्वा यत्नेन गोपयेदिति मालासंस्कारः॥ अथ मालानिर्णयः ॥ तदुक्तं यामले ॥ पद्मबीजादिभिर्म्माला वच्मि जाये शृणुष्व ताः । रुद्राक्षशङ्खपद्माक्षपुत्रञ्जीवकमौक्तिकैः॥ स्फाटिकैर्म्मणिरत्नैश्च सौवर्णैर्विद्रुमैस्तथा।राजतैःकुशमूलैश्च गृहस्थस्याक्षमालिका॥ अङ्गुलीगणनादेकं पर्वण्यष्टगुणं भवेत् । पुत्रञ्जीवैः शतगुणं शतं शङ्खैः सहस्रकम् ॥ प्रबालैर्म्मणिरत्नैश्च दशसाहस्रकं स्मृतम् । तदेव स्फाटिकैः प्रोक्तं मौक्तिकैर्ल्लक्षमुच्यते ॥ प-

श्रीकृष्णदत्तः ।

( १ ) पितडञ्जिया इति प्रसिद्धः । पञ्चरात्रे सुवर्णादिगुडकानां प्रमाणम् । जातीफलप्रमाणेन जप्यं महदुदाहृतम् । बदरास्थिप्रमाणेन स्वल्पकं तदुदाहृतम् ॥ अत्र जातीफलं ( जायफर ) इति प्रसिद्धः ।

द्माक्षैर्द्दशलक्षं स्यात्सौवर्णैः कोटिरुच्यते। कुशग्रन्थ्या कोटिशतं रुद्राक्षैः स्यादनन्तकम् ॥ अथ कामनाभेदेन माला यथा। पद्माक्षैरचिता माला शत्रूणां नाशकारिणी। कुशग्रन्थिमयी माला सर्वपापप्रणाशिनी ॥ पुत्रञ्जीवफलक्लृप्ता कुरुते पुत्रसम्पदम्। प्रबालैर्विहिता माला प्रयच्छेद्विपुलं धनम् ॥ त्रिपुरामन्त्रजपादौ रक्तचन्दनबीजादिभिरतिशस्ता। गणेशजपेपि रक्तचन्दनमाला प्रशस्ता ॥ वैष्णवे तुलसीमाला गजदन्तैर्गणेश्वरे। त्रिपुराया जपे शस्ता रुद्राक्षैस्तु च चन्दनैः ॥ अकारादिक्षकारान्ता अक्षमाला प्रकीर्तिता। क्षार्णं मेरुमुखं तत्र कल्पयेन्मुनिसम्मतम् ॥ पञ्चाशन्मणिभिर्म्माला विहिता सर्वकर्म्मसु काम्यामपि करे कुर्य्यान्मालाभावे तु सुन्दरि ॥ अथ करमाला ॥ सनत्कुमारसंहितायाम् ॥ अनाम्यामध्यमारभ्य कनिष्ठादित एव तु। तर्ज्जनीमूलपर्य्यन्तं दशपर्वसु सञ्ज-

श्रीकृष्णदत्तः ।

(१) दशाधिकजपे सर्वदेवविषये चायं विधिः। तथोक्तमगस्त्यसंहितायाम्। अनामामध्यपर्वाधस्तर्ज्जन्यन्तं क्रमाद्दश। पुनस्तत्प्रतिलोमेन करमालां न्यसेद्बुधः॥ अत्र सर्वोपरिष्ठः अङ्गुष्ठाख्यः। तदधःस्था तर्ज्जनी। तदधोगता मध्यमा। तत्तलगताऽनामिका सर्वाधःस्था कनिष्ठा। अनामिकामध्यपर्वद्वयं तथा कनिष्ठापर्वत्रयम्। अनामिकातृतीयपर्व मध्यमापर्व त्रयम्। तर्ज्जनीमूलपर्व चेति गणनया जपः कर्त्तव्यः ॥

पेत् । एतच्च गोपालविषयम् ॥ अथ शक्तेः करमाला ॥ पर्वद्वयमनामायाः परिवर्त्तेन वै क्रमात् । पर्वत्रयं मध्यमायास्तर्ज्जन्येकं समाहरेत् ॥ शक्तिमाला समाख्याता सर्वतन्त्रप्रदीपिका । श्रीविद्यायां विशेषः ॥ अनामाया मध्यमायाश्च मूलाग्राच्च द्वयं द्वयम् । कनिष्ठायाश्च तर्ज्जन्यास्त्रयं पर्व सुरेश्वरि ॥ अनामाया मध्यमायाश्च मेरुः स्याद्द्वितयं शुभे । प्रादक्षिण्यक्रमेणैव जपेत्त्रिपुरसुन्दरि ॥ इति यामलीयात् ॥ अङ्गुल्यग्रे च यज्जप्तं यज्जप्तं मेरुलङ्घने । पर्वसन्धिषु यज्जप्तं तत्सर्वं निष्फलं भवेत् ॥ जपसङ्ख्या तु कर्त्तव्या नासङ्ख्यातं जपेत्सुधीः । असङ्ख्याकारकस्यास्य जपो भवति निष्फलः ॥ हृदये हस्तमारोप्य तिर्य्यक् कृत्वा कराङ्गुलीः । आच्छाद्य वाससा हस्तं दक्षिणेन सदा जपेत् ॥ अङ्गुलीर्नविमुञ्चीत किञ्चिदाकुञ्चितेन च ॥ अङ्गुलीनां वियोगाच्च च्छिद्रे च स्रवते जपः ॥ कामनाभेदेत्वङ्गुलीनियमः ॥ तर्ज्जन्यङ्गुष्ठयोगेन शत्रूच्चाटनकारकम् ॥ अङ्गुष्ठमध्यमायोगान्मन्त्रसिद्धिः सुनिश्चला ॥ अङ्गुष्ठानामिकायोगादुच्चाटोत्सादने मते ॥ ज्येष्ठाकनिष्ठयोगेन शत्रूणां नाशनं मतम् ॥ जीर्णे सूत्रे पुनः सूत्रे ग्रन्थयित्वा शतं जपेत् । प्रमादात्पतिते हस्ताच्छतमष्टोत्तरं जपेत् ॥ जपेन्निषिद्धसंस्पर्शे क्षालयित्वा यथोचितम् । छिन्ने-

T

प्यष्टोत्तरशतजपः। छिन्नकरभ्रष्टयोस्तुल्यत्वात्॥ अथाऽसननियमः॥ काम्यार्थे कम्बलं चैव श्रेष्ठं तद्रक्तकम्बलम्। कृष्णाजिने ज्ञानसिद्धिर्म्मोक्षः श्रीर्व्याघ्रचर्म्मणि॥ कुशासने मन्त्रसिद्धिर्न्नात्र कार्या विचारणा। धरण्यां दुःखसम्भूतिर्दौर्भाग्यं दारुजासने॥ वंशासने तु दारिद्र्यं पाषाणे व्याधिपीडनम्। तृणासने यशोहानिः पल्लवे चित्तविभ्रमः॥ जपध्यानतपोहानिं वस्त्रासनं करोति च। अत्र वस्त्रासनं केवलवस्त्रं निषिद्धम्। वस्त्रासनं रोगहरमितिविशिष्टफलजनकत्वविधानात्। चैलाजिनकुशोत्तरमिति भगवद्वचनाच्च। इतिश्रीमन्मैथिलजीवनाथकृतषट्चक्रविवरणदीक्षाविधानमन्त्रसङ्ग्रहमालासंस्कारादिविधानं सम्पूर्णम्॥

पञ्चदेवताः। गणेशविष्णुसूर्यदुर्गा शिवाः। पञ्चलोकपालाः। गणेशश्चाम्बिकावायुराकाशं चाश्विनौ तथा। ग्रहाणामुत्तरे पञ्च लोकपालाः प्रकीर्त्तिताः॥ इन्द्रोऽग्निश्च यमश्चैव निर्ऋतिर्वरुणस्तथा। वायुः सोमश्च गिरिशः पन्नगो नवमःस्मृतः॥ ब्रह्मा पूर्वादितः सर्वे दिक्पालाः समुदीरिताः। वज्रशक्तिर्दण्डखड्गौ पाशोऽङ्कुशगदे अपि॥ त्रिशूलपद्मचक्राणि तदस्त्राणि विदुर्बुधाः। षोडशमतृकाः। गौरी १ पद्मा २ शची ३ मेधा ४ सावित्री ५

विजया ६ जया ७। देवसेना ८ सुधा ९ स्वाहा १० मातरो ११ लोकमातरः॥ हृष्टिः १३ पुष्टिः १४ तथा तुष्टि १५ स्तथात्मकुलदेवता १६। अथ पुरश्चरणविधिः ॥ योगिनीहृदये॥ गुरोराज्ञां समादाय शुद्धान्तः करणो नरः। मन्त्रस्य सिद्धिकामेन पुरश्चरणमारभेत्॥जीवहीनो यथा देही सर्वकर्म्मसु न क्षमः। पुरश्चरणहीनोपि तथा मन्त्रः प्रकीर्त्तितः॥ तस्मादादौ स्वयं कुर्य्याद्गुरुं वा कारयेद्बुधः। गुरोरभावे विप्रं वा सर्वप्राणिहिते रतम्॥ स्त्रियं च सुगुणोपेतां सपुत्रां विनियोजयेत्। तत उत्तरायणे शुक्लपक्षे चन्द्रतारानुकूलेऽह्नि पुरस्क्रियां कर्त्तुं स्थानं चिन्तयेत्। पुण्यक्षेत्रं नदीतीरं गुहां पर्वतमस्तकम्। तीर्थप्रदेशं सिन्धूनां सङ्गमं पावनं वनम्॥ उद्यानं रम्यदेशं च बिल्वमूलं तटं गिरेः। तुलसीकाननं गोष्ठं वृषशून्यं शिवालयम्॥ अश्वत्थामलकीमूलं गोशालां जलमध्यतः। देवतायतनं कूलं समुद्रस्य निजङ्गृहम्॥ गृहे शतगुणं विद्याद्गोष्ठे लक्षगुणं भवेत्। कोटिर्देवालये पुण्यमनन्तं शिवसन्निधौ॥म्लेच्छदुष्टमृगव्याघ्रशङ्कातङ्कविवर्जिते। एकान्ते पावने निन्दारहिते भक्तिसंयुते॥स्वदेशे धार्म्मिके देशे सुभिक्षे निरुपद्रुवे।रम्ये भक्तजनस्थाने निवसेत्तापसप्रिये॥ एषामन्यतमं स्थानमाश्रित्य जपमाचरेत्। यत्र

T

ग्रामे जपेन्मन्त्री तत्र कूर्म्मं विचिन्तयेत् ॥ कूर्म्मस्थानमाह गौतमीये ॥ जपस्थानभूमिं नवधा कृत्वा पूर्वादिषु कोष्ठेषु कचटतपयशवर्णानन्ते लक्षाविति विलिख्य मध्यकोष्ठमपिं नवधा विधाय तत्र पूर्वादिषु स्वरद्वन्द्वं विलिखेत् । क्षेत्रनामादिवर्णो यत्र कोष्ठे दृश्यते तदेव दीपस्थानमिति । तदभावस्थानमपि तत्रैव । पर्वते सिन्धुतीरे वा पुण्यारण्ये नदीतटे । यदि कुर्य्यात्पुरश्चर्य्यां तत्र कूर्म्मं न चिन्तयेत् । देवीयामलेपि । कुरुक्षेत्रे प्रयागे च गङ्गासागरसङ्गमे । महाकाले च काश्याञ्च दीपस्थानं न चिन्तयेत् । ग्रामे वा यदिवा वास्तौ गृहे तच्च विचिन्तयेत् । ततः परिगृहीतक्षेत्रमध्ये कूर्म्मचक्रमवलोक्य तस्य मुखे जपमण्डपं कृत्वा पुरश्चरणं कुर्य्यादिति । अथ पुरश्चरणे भक्ष्याभक्ष्यनियमो गौतमीये । पुरश्चरणकृन्मन्त्री भक्ष्याभक्ष्यं विचिन्तयेत् । अन्यथाभोजनादेवि सिद्धिहानिश्च जायते ॥ भुञ्जानोपि हविष्यान्नं शाकं यावकमेव च । पयोमूलं फलं वापि यत्र यत्रोपलभ्यते ॥हविष्यमाहागस्त्यसंहितायाम्॥दधि क्षीरं घृतं गव्यमैक्षवं गुडवर्ज्जितम् । तिलाश्चैव सिता मुद्गाः कन्दं केमुकवर्जितम् ॥ नारिकेलफलञ्चैव कदली कवली तथा । आम्रमामलकञ्चैव पनसञ्च हरीतिकिम् ॥ व्रतान्तरे प्रशस्तञ्च हविष्यं मन्यते बुधैः ॥ व्रतान्तर इति ॥

T

हैमन्तिकं सितास्विन्नमित्यादि ॥ अथ वर्ज्यानि । विवर्ज्जयेन्मधु क्षारं लवणन्तैलमेव च । ताम्बूलं कांश्यपात्रञ्च दिवा भोजनमेव च ॥ अन्यच्च । क्षारञ्च लवणं मांसं गृञ्जनं कांस्यभोजनम् । माषाढकीमसूरञ्च कोद्रवांश्चणकानपि ॥ कौटिल्यं क्षौरमभ्यङ्गमनिवेदितभोजनम् । असङ्कल्पितकृत्यञ्च वर्ज्जयेन्मर्द्दनादिकम्॥ स्नायाच्च पञ्चगव्येन केवलामलकेन वा । मन्त्रजप्तान्नपानीयैः स्नानाचमनभोजनम् ॥ कुर्य्याद्यथोक्तविधिना त्रिसन्ध्यं देवतार्च्चनम् । हिक्कां कासं तथाजृम्भां निद्राञ्च परिवर्ज्जयेत् ॥ अथ भोजननियममाह ॥ जठरं पूरयेदर्द्धमन्नैर्भागं जलेन च । वायोः सञ्चरणार्थाय चतुर्थमवशेषयेत् ॥ अथ परान्ननिषेधः कुलार्णवे । यस्यान्नपानपुष्टाङ्गः कुरुते धर्म्मसञ्चयम् । अन्नदातुः फलस्यार्द्धं कर्त्तुश्चार्द्धं न संशयः ॥ तस्मात्सर्वप्रयत्नेन परान्नं परिवर्ज्जयेत्। पुरश्चरणकाले तु सर्वकर्म्मसु शाम्भवि ॥ जिह्वा दग्धा परान्नेन करौ दग्धौ प्रतिग्रहात् । मनो-दग्धं परस्त्रीभिः कथं सिद्धिर्वरानने ॥ अत्र परान्नं भिक्षे-

तरविषयम् ॥ अथ जपे नियमः ॥ उक्तसङ्ख्याजपं कुर्य्या·

• श्रीकृष्णदत्तः ।

( १ ) अत्र दिङ्नियमः परिभाषाविवेके । यत्र दिङ्नियमो नास्ति जप- होमादिकर्मसु । तिस्रस्तत्र दिशो ज्ञेया ऐन्द्री सौम्याऽपराजिता । अपराजिता ईशानादिक् । अन्यदपि । कर्मोपदिश्यते यत्र कर्त्तुरङ्गं न चोच्यते । दक्षिणस्तत्र विज्ञेयः कर्मणां पारगः करः ॥ कर्मणामुपारगो दक्षिणहस्तः ॥ अथ लघुहारी- ते । जपे होमे तथा दाने स्वाध्याये पितृतर्प्पणे । अशून्यन्तु करं कुर्याद्धिरण्यर- जतैः कुशैः । इत्यत्र सुवर्णरजतकुशानां धारणं कृत्वा तत्तत्कर्म कर्त्तव्यमिति । अत्रापि दक्षिणहस्तानामिकायां सुवर्णादिकं धार्य्यम् । तथोक्तं देवीपुराणे । अना- मिकायां तद्धार्य्यं दक्षिणस्य करस्य चेति । स्मृतिसारे । दक्षिणहस्तमध्यमायामपि कु- शधारणं विहितम् । अथ केवलं सपवित्रकोपि जपादिकेषु कर्मसु फलभोक्ता भ- वेत् । तथोक्तं कूर्म्मपुराणे दर्भहीनं च यत्कर्म यच्च दानं विनोदकम् । असङ्- ख्यातं च यज्जप्तं तत्सर्वं निष्प्रयोजनम् ॥ तथान्यदपि । सव्यः सोपग्रहः कार्यो दक्षिणः सपवित्रकः । इत्यनेन सुवर्णादिविनापि पवित्रमात्रधारणेन कृतं कर्म सफलमिति । अत्र याज्ञवल्क्यः । स्त्रीशूद्रपतितांश्चैव रासभञ्च रजस्वलाम् । जपकाले न भाषेत ब्रह्महोमादिकेषु च ॥ तूष्णीमासीत तु जपश्चाण्डालपतिता- दिकान् । दृष्ट्वा तान् वार्य्युपस्पृश्य स्नात्वा भाष्य पुनर्जपेत् ॥ विधिदृष्टं तु यत्कर्म करोत्यविधिना नरः । फलन्न किञ्चिदाप्नोति क्लेशमात्रं हि तस्य तत्॥ श्रद्धाविधिसमायुक्तं कर्म यत्क्रियते नृभिः । सुविशुद्धेन भावेन तदानन्त्याय कल्पते ॥ तथा यदि वाग्यमलोपः स्याज्जपादिषु कथञ्चन । व्याहरेद्वैष्णवं मन्त्रं स्मरेद्वा विष्णुमव्ययम् ॥ आसीनः प्राङ्मुखो दर्भपाणिः पत्नी तदुत्तरा । द्विराचान्तो बद्धशिखः सर्वकर्मस्वयं विधिः । तथा वायुपुराणेप्युक्तम । क्रियां यः कुरुते मोहादनाचम्येह नास्तिकः । भवन्तीह वृथा तस्य क्रियाः सर्वा न सं- शयः॥एतान्यपि तु कर्माणि दानादीनि विशेषतः॥अन्तर्जानुविशेषेण तद्वदाचमनं नृप। व्यवस्थासागरे ॥ स्वहस्तग्रथिता माला स्वयं घृष्टञ्च चन्दनम् । अघृतो माष सूपश्च शक्रादपि हरेच्छ्रियम् ॥ तथा गौतमः । क्रोधं मोहं क्षुतं निद्रां निष्ठीवन विजृम्भितम् । दर्शनं वनितानां च वर्जयेज्जपकर्मणि ॥ आचमेत्सम्भवे चैषां स्मरेद्विष्णुं सुरार्चितम् ॥

त्पुरश्चरणसिद्धये ॥ देवतागुरुमन्त्राणामैक्यं सम्भावय-न्धिया ॥ जपेदेकमनाः प्रातः कालं मध्यन्दिनावधिः । य-त्सङ्ख्यया समारब्धं तत्कर्त्तव्यमहर्निशम् ॥ यदि न्यू-नाधिकं कुर्य्याद्व्रतभ्रष्टो भवेन्नरः ॥ कुलार्णवेपि । न्यूनाति-रिक्तकर्म्माणि न फलन्ति कदाचन । यथाविधिकृतान्येव सत्कर्म्माणि फलन्तिहि॥मुण्डमालातन्त्रेपि॥यत्सङ्ख्यया समारब्धं तज्जप्तव्यं दिने दिने । न्यूनाधिकं न कर्त्तव्य-मासमाप्तं सदा जपेदिति ॥ अथ जपे द्वादशधर्म्माः कु-लार्णवे । भूशय्या ब्रह्मचर्य्यत्वं मौनमाचार्य्यसेवनम् । नित्यपूजा नित्यदानं देवतास्तुतिकीर्त्तनम् ॥ नैमित्तिका-र्च्चनञ्चैव विश्वासो गुरुदेवयोः। जपे निष्ठा द्वादशैते धर्म्माः स्युर्म्मन्त्रसिद्धिदाः॥ स्त्रीशूद्रपतितव्रात्यनास्तिकोच्छिष्ट-भाषणम् । असत्यभाषणञ्चैव जपकाले विवर्ज्जयेत् ॥ योगिनीतन्त्रे ॥ असत्यभाषणं वाचं कुटिलां परिवर्ज्जयेत् । सत्येनापि न भाषेत जपहोमार्च्चनादिषु ॥ वर्ज्जयेद्गीतवा-द्यादि श्रवणं नृत्यदर्शनम् । अभ्यङ्गङ्गन्धलेपञ्च पुष्प-धारणमेव च ॥ त्यजेदुष्णोदकस्नानमन्यदेवप्रपूजनम् । अन्यदपि तत्रैव ॥ नैकवासा जपेन्मन्त्रं बहुवस्त्राकुलोपि वा। पतितानामन्त्यजानां दर्शने भाषणे श्रुते ॥ क्षुतेऽधो-वायुगमने जृम्भणे जपमुत्सृजेत् । तथा तस्य च तत्प्रा-

T

द्वौ प्राणायामं षडङ्गकम् ॥ कृत्वा सम्यग्जपेच्छेषं यद्वा सूर्य्यादिदर्शनम् । आदिशब्दादग्निं ब्राह्मणमपि अवलोकयेत् ॥ अथान्यत्तन्त्रान्तरे ॥ मनः संहरणं शौचं मौनं मन्त्रार्थचिन्तनम् । अव्यग्रत्वमनिर्वेदो जपसम्पत्तिहेतव इति । अन्यदपि । उष्णीषी कञ्चुकी नग्नो मुक्तकेशो गणावृतः । अपवित्रकरोऽशुद्धः । प्रलपन्नजपेत्क्वचित् ॥ अनासनः शयानो वा गच्छन् भुञ्जान एव वा । रथ्यायामाशिवस्थाने न जपेत्तिमिरालये ॥ मार्ज्जारं कुक्कुटं श्वानं क्रौञ्चं शूद्रं खरं कपिम् ॥ दृष्ट्वाचम्य जपेत्कर्णं स्पृष्ट्वा स्नानं विधीयते। एवं जपनियमः सर्वत्र ज्ञेयः। मानसे न दोषकृदिति ॥ अथ मानसजपे नियमाभावमुपदिशाति तत्रैव ॥ अशुचिर्वा शुचिर्वापि गच्छं स्तिष्ठन् स्वपन्नपि। मन्त्रैकशरणो विद्वान्मनसैवं सदाभ्यसेत् ॥ न दोषो मानसे जाप्ये सर्वदेशेपि सर्वदा । जपनिष्ठो द्विजश्रेष्ठोऽखिलयज्ञफलं भेत् ॥ श्रीविद्यादिमन्त्रजपे तु तत्तन्मन्त्रे विशेषो ज्ञेयः ॥ अथ जपफलमाह सर्वधर्म्मे ॥ जपनिष्ठो द्विजश्रेष्ठोऽखिलयज्ञफलं भेत्। सर्वेषामेव यज्ञानां जायतेऽसौ महाफलः ॥ जपेन देवता नित्यं स्तूयमाना प्रसीदति। प्रसन्ना विपुलान्कामान्। दद्यान्मुक्तिञ्च शाश्वतीम् । यक्षरक्षः पिशाचाश्च ग्रहाः । सर्प्पाश्च भीषणाः। जापिनं नो-

पसर्प्पन्ति भयभीताः समन्ततः ॥ यावन्तः कर्म्मयज्ञाः स्युः पवित्राणि तपांसि च । सर्वे ते जपयज्ञस्य कलां नार्हन्ति षोडशीम् ॥ माहात्म्यं वाचिकस्यैतज्जपयज्ञस्य कीर्त्तितम् । तस्माच्छतगुणोपांशुः । सहस्रो मानसःस्मृतः ॥ मानसः सिद्धिकामानां पुष्टिकाम उपांशुकः । वाचिको मारणे चैव प्रशस्तो जप ईरितः॥ अथ मानसादिजपलक्षणम् ॥ धिया यदक्षरश्रेणीं वर्णस्वरपदात्मिकाम् । उच्चरेदर्थमुद्दिश्य मानसः स जपः स्मृतः ॥ जिह्वोष्ठौ चालयेत्किञ्चिद्देवतागतमानसः । किञ्चिच्छ्रवणयोग्यः स्यादुपांशुः स जपः स्मृतः॥ मन्त्रमुच्चारयेद्वाचा वाचिकः स जपः स्मृतः। विशुद्धेश्वरतन्त्रेपि॥ निजकर्णगोचरो यो मानसः स जपः स्मृतः । उपांशुर्न्निजकर्णस्य गोचरः परिकीर्त्तितः ॥ वाचिकस्तु जनैर्वेद्यास्त्रिविधो जप ईरितः उच्चैर्ज्जपाद्विशिष्टः स्यादुपाशुर्द्दशभिर्गुणैः ॥ जिह्वाजपाच्छतगुणः सहस्रो मानसः स्मृतः। तन्त्रान्तरे च ॥ उच्चैर्ज्जपोऽधमः प्रोक्त उपांशुर्म्मध्यमः स्मृतः। उत्तमो-

श्रीकृष्णदत्तः ।

(१) योगियाज्ञवल्क्यः । ध्यायेत मनसा मन्त्रं जिह्वौष्ठौ न विचालयेत् । न कम्पयेच्छिरोग्रीवं दन्तान्नैव प्रकाशयेत् ॥

(२) यदुच्चनीचस्वरितैः स्पष्टशब्दवदक्षरैः । मन्त्रमुच्चारयेद्व्यक्तं जपयज्ञः स वाचिकः ॥

मानसो देवि त्रिविधः कथितो जपः॥ अतिह्रस्वो व्याधिहेतुरतिदीर्घो वसुक्षयः। अक्षराक्षरसंयुक्तं जपेन्मौक्तिकहारवत्॥ मनसा यः स्मरेत्स्तोत्रं वचसा वा मनुं जपेत्। उभयं निष्फलं याति भिन्नभाण्डोदकं यथा॥ अथ मन्त्रस्य प्रभुत्वकारणमाह गौतमीये॥ पशुभावे स्थिता मन्त्राः केवला वर्णरूपिणः।सौषुम्णाध्वनिमन्त्रास्ते प्रभुत्वं यान्ति तज्जपात्॥ मन्त्राक्षराणि चिच्छक्तौ प्रोतानि परिभावयेत्। तामेव परमव्योम्नि परमानन्दबृंहिते॥ दर्शयत्यात्मसद्भावं पूजाहोमादिभिर्विना। कुलार्णवे तु विशेषः। मनोऽन्यत्र शिवोऽन्यत्र शक्तिरन्यत्र मारुतः। न सिद्ध्यति वरारोहे कल्पकोटिशतैरपि॥ अथ मन्त्रस्य सूतकद्वयमाह तत्रैव॥ जातसूतकमादौस्यादन्ते च मृतसूतकम्। सूतकद्वयसंयुक्तो यो मन्त्रःस न सिद्ध्यति॥ ब्रह्मबीजं मनौ दत्वा चाद्यन्ते परमेश्वरि। सप्तवारं जपेन्मन्त्रं सूतकद्वयमुक्तये॥ब्रह्मबीजमोङ्कारः सप्तधा प्रणवमादौ प्रजप्य ततो मत्रं जप्त्वा चान्ते पुनः सप्तधा प्रणवं जपेदिति॥ अथान्यत्॥मन्त्रार्थं मन्त्रचैतन्यं योनिमुद्रां न वेत्ति यःशतकोटिजपेनापि तस्य सिद्धिर्न जायते॥ लुप्तबीजाश्च ये

---

श्रीकृष्णदत्तः।

(१) योगियाज्ञवल्क्यः। प्रच्छन्नानि च दानानि ज्ञानञ्च निरहङ्कृतम्। जप्यानि च सुगुप्तानि तेषां फलमनन्तकम्॥

मन्त्रा न दास्यन्ति फलं प्रिये । मन्त्राश्चैतन्यसहिताःस. र्वसिद्धिकराः स्मृताः ॥ चैतन्यरहिता मन्त्राः प्रोक्ता वर्णा- स्तु केवलम् । फलं नैव प्रयच्छन्ति कल्पकोटिशतैरपि- मन्त्रोच्चारे कृते यादृक् स्वरूपं प्रथमं भवेत् । शते स- हस्रे लक्षे वा कोटिजप्तेनतत्फलम् ॥ हृदये ग्रन्थिभेद- श्च सर्वावयववर्द्धनम् । आनन्दाश्रूणि पुलको देहावेशः कु लेश्वरि ॥ गद्गदोक्तिश्च सहसा जायते नात्र संशयः । स- कृदुच्चरितेप्येवं मन्त्रे चैतन्यसंयुते॥ दृश्यन्ते प्रत्यया य- त्र पारम्पर्य्यन्तदुच्यते ॥ अथ मन्त्रसमर्प्पणप्रकारो गौ- तमीये ॥ एवं जपं पुरा कृत्वा तेजोरूपं समर्पयेत । देवस्य दक्षिणे हस्ते कुशपुष्पार्घवारिभिः ॥ सफलं तद्विभाव्यैवं प्राणायामं समाचरेत् । जपस्यादौ जपान्ते च त्रितयं तु समाचरेत् ॥ शक्तिपक्षे वामहस्ते जपं समर्प्पयेत् । एवं जपं पुरा कृत्वा गन्धाक्षतकुशोदकैः । जपं समर्पयेद्देव्या वामहस्ते विचक्षणः ॥जपान्ते होमयेन्मन्त्री प्रत्यहं तद्दशां- शतः । तर्प्पणं चाभिषेकं च तद्दशांशं ततो मुनेः ॥प्रत्यहंभो- जयेद्विप्रान् न्यूनाधिकप्रशान्तये । अथवा सर्वपूर्त्तौ च हो- मादिकमथाचरेत् ॥ होमद्यशक्तौ सनत्कुमारीये ॥ यद्यद- ङ्गं भवेद्भङ्गं तत्सङ्ख्याद्विगुणो जपः । होमाभावे जपः कार्य्यो होमसङ्ख्या चतुर्गुणः ॥ विप्राणां क्षत्रियाणाञ्च

रससङ्ख्यागुणः स्मृतः। वैश्यानां बसुसङ्ख्यातमेषां स्त्रीणामयं विधिः। अत्राप्यशक्तः। तत्प्रकारो योगिनीहृदये। होमकर्म्मण्यशक्तानां विप्राणान्द्विगुणो जपः। इतरेषाञ्चवर्णनान्त्रिगुणादिसमान्वितः॥ इत्यनेन स्त्रीशूद्रयोर्होमाधिकारः। तच्च ब्राह्मणद्वारैव॥ तथाच तन्त्रान्तरे। ॐकारोच्चारणाद्धोमाच्छालग्रामशिलार्च्चनात्। ब्राह्मणीगमनाच्चैव शूद्रश्चाण्डालताम्व्रजेदिति साक्षान्निषेधात्।तथाप्रणवादिश्च यो मन्त्रो न स्त्रीशूद्रे प्रशस्यत इति। सर्वस्त्रीणां शूद्रतुल्यता ज्ञेया॥ तथागस्त्यसंहितायाम्॥ यदि होमे न शक्तःस्यात्पूजायां तर्प्पणेपि वा। तावत्सङ्ख्याजपेनैव ब्राह्मणाराधनेन वा॥ भवेदङ्गद्वयेनैव पुरश्चरणकर्म्मणि। गुरवे दक्षिणां दत्वा भोजनाच्छादनादपि॥ गुरुसन्तोषमात्रेण मन्त्रसिद्धिर्भवेद्ध्रुवम्। गुरुमूलमिदं सर्वमित्याहुस्तन्त्रवेदिनः॥ गुरुरेव परब्रह्म तस्मादादौ तमर्च्चयेत्। तदन्ते महतीं पूजां कुर्यात्साधकसत्तमः॥ सुवासिनीं कुमारीञ्च भूषणैरपि भूषयेत्। मिष्टान्नफलमूलैश्च भोजयेत्तां यथाविधि॥ एवं सिद्धमनुर्म्मन्त्री साधयेत्सकलेप्सितान्॥

### अथ ग्रहणकालिकपुरश्चरणविधिः

तत्रैव। अथवान्यप्रकारेण पुरश्चरणमिष्यते।ग्रहणेऽर्कस्य

चेन्दोर्वा शुचिः पूर्वमुपोषितः॥नद्यां समुद्रगामिन्यां नाभि-मात्रोदके स्थितः । स्पर्शाद्विमुक्तिपर्य्यन्तं जपेन्मन्त्रमनन्यधीः ॥ नद्यभावे तु तत्रैव॥ यद्वा पुण्योदके स्नात्वा शुचिः पूर्वमुपोषितः । ग्रहणादिविमोक्षान्तं जपेन्मन्त्रं समाहितः ॥ मुण्डमालायाम्॥ दृष्ट्वा स्नात्वा सुसङ्कल्पो विमोक्षान्तं जपं चरेत् । तावद्धोमादिकं कुर्य्याद् ग्रहणान्ते शुचिः पुमान् ॥ एवं जपान्मन्त्रसिद्धिर्भवत्येव न संशय इति। ग्रहणे पुरश्चरणस्य मुख्यतामाह ॥ श्राद्धादावनुरोधेन त्यजेज्जाप्यं नरो यदि। स भवेद्देवताद्रोही पितॄन् सप्त नयत्यधः ॥ जपयज्ञं परित्यज्य पितृयज्ञं करोति यः । स भवेद्देवताद्रोही पितॄन् सप्त नयत्यधः ॥ सनत्कुमारीयवचनाज्जपस्यावश्यकत्वम्। वस्तुतस्तु आरब्धपुरश्चरणविषयकमिदम् ॥ पौरश्चर्य्ये समारब्धे तत्र चेद् ग्रहणं भवेत्। तदा श्राद्धानुरोधेन जपं नैव परित्यजेत् । इत्युक्तेः ।

॥ अथ पुरश्चरणस्वरूपमाह ॥

जपहोमौ तर्प्पणञ्चाभिषेको विप्रभोजनम् । पञ्चाङ्गोपासनं लोके पुरश्चरणमिष्यते ॥ ग्रहणादौ तु जपमात्रमेव पुरश्चरणम् । अत एव पञ्चाङ्गस्वरूपपुरश्चरणे कृते मुख्यप्रयोगेप्यधिकार इति । तदकरणे केवलजपमात्रे पुरश्चरणे नाधिकार इति तत्वम् ।

अथ पुरश्चरणकालोभिहितो वाराहीये ॥ चन्द्रतारानुकूले च शुक्लपक्षे शुभेऽहनि । आरभेत पुरश्चर्य्यां हरौ सुप्ते न चाचरेत् ॥ ग्रहणे च महातीर्थे न कालमवधारयेत् ।

॥ अथ पुरश्चरणप्रयोगः ॥

तत्र तावद्भूमेः परिग्रहं कृत्वा पुरश्चरणकृन्नरः प्राक्तृतीयदिवसे क्षौरादिकं विधाय वेदिकाचतुर्द्दिक्षु क्रोशमात्रं क्रोशद्वयं वा यावदिष्टं वा क्षेत्रं चतुरस्रम् ॥ आहारादिविहारार्थं परिकल्प्य कूर्म्मचक्रानुगुणं मण्डपं विधाय एकभुक्तञ्च कुर्य्यात् । ततः परदिने स्नानादिकं विधाय शुद्धःसन् अश्वत्थोदुम्बरप्लक्षाणामन्यतमस्य वितस्तिमात्रान् दशकीलकान् ओं अस्त्रायफडिति मन्त्रेणाष्टोत्तरशताभिमन्त्रितान् दशदिक्षु निखनेत् । ओं तत्सत् अद्येत्यादि अमुकगोत्रस्यामुकशर्म्मणे ममैतत्क्षेत्रस्य सकलविघ्नोच्चाटनपूर्वकस्वेष्टमन्त्रसिद्धिकामः पूर्वादिदशदिक्षु कीलारोपणं गणपतिवास्तुपुरुषक्षेत्रपालपूजनंचाहङ्करिष्ये । यथा । ओं ये चात्र विघ्नकर्त्तारो दिविभुव्यन्तरिक्षगाः । विघ्नभूताश्च ये चान्ये मम मन्त्रस्य सिद्धिषु ॥ मयैतत्कीलितं क्षेत्रं परित्यज्य विदूरतः । अपसर्प्पन्तु ते सर्वे निर्विघ्नं सिद्धिरस्तु मे ॥ इत्यनेन निखन्यतेषु ओं नमः सुदर्शनाय अस्त्राय फडिति मन्त्रेणास्त्रं

सम्पूज्य पूर्वादि क्रमेण इन्द्रादिलोकपालान्पूजयेत् । यथा । ओं भूर्भुवः स्वरिन्द्रलोकपाल इहागच्छेत्यावाह्य पाद्यादिभिः सम्पूज्य स्वस्वदिक्षु वह्न्यादिलोकपालान्पूजयेद्यथा । ततो मध्यस्थाने क्षेत्रपालं वास्त्वीशञ्च सम्पूज्य सर्वविघ्नविनाशार्थं गणपतिं पूजयेत् । यथा । ओं अद्येत्याद्यमुकगोत्रोऽमुकदेवशर्म्मा मत्कर्त्तव्यामुकमन्त्रपुरश्चरणकर्म्मणि सर्वविघ्नविनाशार्थं गणेशपूजनमहङ्करिष्ये । इति सङ्कल्प्य वेदिकामध्ये पञ्चोपचारैर्गणेशं पूजयेत् । उक्तञ्च । ग्रामं क्रोशमितं स्थानं नद्यादौ स्वेच्छया पुनः । नगरादावपि क्रोशङ्क्रोशयुग्ममथापि वा ॥ आहारादिविहारार्थन्तावतीं भूमिमाक्रमेत् । क्षेत्रं वा यावदिष्टन्तु विहारार्थं प्रकल्पयेत् ॥ क्षीरवृक्षोद्भवान् कीलानस्त्रमन्त्राभिमन्त्रितान् । निखनेद्दशदिग्भागे तेष्वस्त्रं च प्रपूजयेत् ॥ लोकपालान्पुनस्तेषु गन्धाद्यैः पूजयेत्सुधीः । क्षेत्रपालादिकं तत्र पूजयेद्विधिवत्ततः ॥ क्षेत्रेशं वास्तुनामानं विघ्नराजं समर्च्चयेत् । दिक्पतिभ्यो बलिं दद्यात्ततः क्षेत्रं समानिशेत् ॥ इन्द्रः १ अग्निः २ यमः ३ निर्ऋतिः ४ वरुणः ५ वायुः ६ सोमः ७ ईशानः ८ ब्रह्मा ९ ऊर्द्ध्वम् । अनन्तः १० अधः ईन्द्रेशानयोर्म्मध्ये ब्रह्माणं पश्चिमनिर्ऋतिकोणयोर्मध्ये अनन्तम् । अथ ततो माष-

T

भक्तादिना पूजितदेवताभ्यो बलिं दद्यात्। ओं रौद्रारौद्रकर्म्माणो रौद्रस्थाननिवासिनः। मातरोप्युग्ररूपाश्च गणाधिपतयश्च ये॥ विघ्नभूताश्च ये चान्ये दिग्विदिक्षु समाश्रिताः। सर्वे ते प्रीतिमनसः प्रतिगृह्णन्त्विमे बलिम्॥ इत्यनेनाष्टदिक्षु भूतेभ्यो बलिं दद्यात्। ततो भूतबलिदानं। भूतानि यानीह वसन्ति लोके बलिं गृहीत्वा विधिवत्प्रयुक्तम्॥ अन्यत्र वासं परिकल्पयन्तु क्षमन्तु तान्यत्र नमोस्तु तेभ्यः॥ इति पठित्वा भूतबलिं दद्यात्॥ ततो गायत्रीं जपेत्। प्रातः स्नात्वा तु गायत्र्याः सहस्रं प्रयतो जपेत्। ज्ञाताज्ञातस्य पापस्य क्षयार्थं प्रथमन्तत इति विद्याधराचार्य्यैः। यत्तु प्रातः स्नात्वा तु सावित्र्या अयुतं प्रयतो जपेत्। तत्पुनरत्यन्तपापशङ्कया। सङ्कल्पो यथा। ओं अद्येत्याद्यमुकगोत्रोऽमुकशर्म्मा ज्ञाताज्ञात पापक्षयकामोऽष्टोत्तरसहस्रगायत्रीजपमहं करिष्ये। तत उपवासं हविष्यान्नं वा कुर्य्यात्। ततः परदिने प्रातः स्नात्वा स्वस्तिवाचनपूर्वकं सङ्कल्पं कुर्य्यात्। ओं तत्सत्। अद्येत्याद्यमुकगोत्रोऽमुकशर्म्मा अमुकदेवताया अमुकमन्त्रसिद्धिप्रतिबन्धकाशेषदुरितक्षयपूर्वकतत्तन्मन्त्रसिद्धिकामोद्यादियथा कालममुकमन्त्रस्य यत्सङ्ख्यजपतद्दशांशहोमतद्दशांशतर्प्पणतद्दशांशाभिषेकतद्दशांशब्राह्मण-

भोजनरूपपुरश्चरणमहं करिष्ये। इति सङ्कल्प्य भूतशुद्धिप्राणायामादिकं कुर्य्यात्। स्वस्वपद्धत्युक्तक्रमेण देवतां सम्पूज्य दीपे प्रज्वलिते देवतां हृदये कृत्वा प्रातःकालमारभ्य मध्यदिनं यावज्जपं कुर्य्यात्। ततो होमस्ततस्तर्प्पणं ततोऽभिषेकस्ततो ब्राह्मणभोजनं कुर्य्यात्। उक्तञ्च कुलार्णवे॥ तर्प्पणं च ततः कुर्य्यात्तीर्थोदैश्चेन्दुमिश्रितैः। जलं देवं समावाह्य पाद्याद्यैरुपचारकैः॥ सम्पूज्य विधिवद्भक्त्या परिवारसमन्वितम्। एकैकाञ्जलितोयेन परिवारान्प्रतर्प्पयेत्॥ ततो होमं दशांशेन तर्प्पयेत्परदेवताम्। तर्प्पणवाक्यं तु। मूलं नमः अमुकदेवतां तर्प्पयामि नमः इति। अभिषेकवाक्यन्तु मूलं नमः। अमुकदेवतामहमभिषिञ्चयामि। इति कलशमुद्रया मूर्द्धि अभिषिञ्चेत्। तथा च। नमोन्ते मूलमुच्चार्य्य तदन्ते देवताभिधाम्। द्वितीयान्तमहं पश्चादभिषिञ्चाम्यनेन तु॥ अभिषिञ्चेत्स्वमूर्द्धानन्तोये कुम्भाख्यमुद्रया। शक्तिविषये तु। मन्त्रान्ते नाम चोच्चार्य्य सिञ्चयामि नमः पदमिति नीलतन्त्रात्। मूलममुकदेवतां तर्प्पयामि नम इति वाक्यम्। ततो ब्राह्मणभोजनम्। ततो दक्षिणा। अद्यकृतैतदमुकदेवताया अमुकमन्त्रस्य पुरश्चरणकर्म्मणः साङ्गतासिध्यर्थं दक्षिणामिदं काञ्चनम.

ग्निदैवतं यथानामगोत्राय गुरवे तुभ्यमहं सम्प्रददे । तदभावे तत्पुत्रादिभ्यो देया । ततश्छिद्रावधारणं कुर्य्यात् ।

अथ ग्रहणकालिकपुरश्चरणसङ्कल्पः ॥

अद्येत्याद्यमुकगोत्रोऽमुकशर्म्मा राहुग्रस्ते दिवाकरे निशाकरे वा असुकदेवताया अमुकमन्त्रसिद्धिकामो ग्रासाद्विमुक्तिपर्य्यन्तं जपरूपपुरश्चरणमहं करिष्ये ।इति सङ्कल्प्य जपेत्।तद्दिने तत्परदिने वा स्नानादिकं विधाय।ओं अद्येत्याद्यमुकमन्त्रस्य कृतैतद्ग्रहणकालीये यत्सङ्ख्याकजपतद्दशांशहोमतद्दशांशतर्प्पणतद्दशांशाभिषेकतद्दशांशब्राह्मणभोजनकर्म्माण्यहं करिष्ये । इति सङ्कल्प्य होमादिकं कुर्य्यात् । दक्षिणादानन्तु पूर्ववत् ।

इति दीक्षाप्रकाशे पुरश्चरणप्रकारः ॥

अथ पुरश्चरणे कृतेपि यदि मन्त्रसिद्धिर्नस्यात्तदा मन्त्रस्य दशसंस्काराः कर्त्तव्याः । तथाकृतेपि यदि मन्त्रसिद्धिर्न्न भवति तदा द्रावणादिकं कुर्य्यात् । तदुक्तं महातन्त्रे ॥ द्रावणं बोधनं वश्यं पीडनं शोषणपोषणे । दहनञ्च वुधः कुर्यात्तदा सिद्धो भवेन्मनुः अथैषां प्रयोगो यथा ॥ तत्रादौ द्रावणप्रयोगः ॥ वमिति वरुणबीजग्रथितं मूलमन्त्रङ्कर्प्पूरकुङ्कुमगोरोचनमनःशिलोशीरैः पूजाचक्ररूपयन्त्रमध्ये विलिख्य कस्मिंश्चि-

तृपात्रे दुग्धघृतमधुजलान्येकीकृत्य तत्र यन्त्रं निधाय पूजाजपहोमादिकं कुर्य्यात्। ततो मन्त्रः सिद्धो भवति।

॥ अथ ग्रन्थनप्रकारः ॥

एको मन्त्रस्य वर्णः स्यात्ततो नामाक्षरं पुनः।
मन्त्रार्णौ नामवर्णश्चेत्येवं ग्रन्थनमीरितम्। एवं कृत्वा जपे १०८ ततः सिद्धो भवति।

॥ अथ बोधनम् ॥

वाग्भवबीजेन ऐमिति बीजेन सम्पुटितं मूलमन्त्रं जपेत्। यथा। ऐं रां रामायनमः ऐं॥ इति बोधनम् ॥

अथ वशीकरणम्।

भूर्जपत्रे रक्तचन्दनदारुहरिद्राकस्तूरीमनः शिलाभिर्मूलमन्त्रमालिख्य कण्ठे सन्धार्य जपेत्।

॥ अथ पीडनम् ॥

तत्राधरोत्तरभावेन मन्त्रपदानि मन्त्राक्षराणि प्रजप्य अधरोत्तरभावेन देवं ध्यात्वा अर्कदुग्धेन यन्त्रमालिख्य तत्पादेनाक्रम्याधरोत्तरपठितमन्त्रेणजुहुयात्।

॥ अथ पोषणम् ॥

बालात्रितयिबीजेन सौः इति बीजेन पुटितं मन्त्रं मधुगोदुग्धाभ्यां भूर्जादौ विलिख्य धारयेत्।

T

॥ अथ शोषणम् ॥

तत्र यज्ञभस्मना वायुबीजविदर्भितं मूलं विलिख्य कण्ठे धारयेत् । विदर्भणं यथा । यं यं शां यं यं रा यं यं मा यं यं य यं यं न यं यं मः यं यं इति । आदौ मन्त्राक्षरद्वन्द्वमेकं नामाक्षरं ततः । एवं पुनः पुनः प्रोक्तो विदर्भो मन्त्रवित्तमैरिति ।

॥ अथ दहनम् ॥

पालाशबीजतैलेन वह्निबीजसम्पुटितमन्त्रस्य एकैकमक्षरं मातृकार्णैः पुटीकृत्य मन्त्रविद्यां विशेषतः । शतमष्टोत्तरं पूर्वं प्रजपेत्कुलसिद्धये ॥ मातृकापुटितं कृत्वा मध्ये वर्णं निधाय च । मन्त्रवर्णांस्ततः कुर्य्याद्बोधनं मन्त्रसम्मतं । तारसम्पुटितो वापि दुष्टमन्त्रोपि सिद्ध्यति ॥ इत्यन्यः प्रकारः । टिप्पणम् । विलिख्य प्रतिवर्णं चाधश्चोर्द्ध्वञ्च वह्निबीजमालिख्य कण्ठे धारयेदिति । एवं भूर्जे विलिख्य धारयेदिति ॥ तदुक्तञ्च महातन्त्रे ॥ द्रावणं बोधनं वश्यं पीडनं पोषणशोषणे । दहनञ्च बुधः कुर्य्यात्ततः सिद्धो भवेन्मनुः ॥ द्रावणं वरुणबीजेन ग्रन्थनं क्रमयोगतः तन्मन्त्रं यन्त्रआलिख्य शिलाकर्पूरकुङ्कु मैः॥उशीरगोरोचनाभ्यां च मन्त्रं सङ्ग्रथितं लिखेत् । क्षीराज्यमधुतोयानां मध्ये तं लिखितं क्षिपेत् ॥ पूजनाज्जपनाद्धोमाद्द्रा-

वितः फलदो भवेत्। द्रावितोपि न सिद्धश्चेद्बोधनं तस्य कारयेत्। बालातृतीयबीजेन सम्पुटीकृत्य तं जपेत्। एवं बुद्धो भवेत्सिद्धो नो चेत्तस्य वशं कुरु॥ कुचन्दनं तथा दारुहरिद्रामदनं शिला। एतैस्तु लिखितो मन्त्रो भूर्जपत्रे सुशोभने॥ कण्ठे धृतो भवेत्सिद्धो नोचेत्सनूताडनं कुरु। अधरोत्तररूपेण पदानि परिजप्य वै। ध्यायीत देवतां तद्वदधरोत्तररूपिणीम्। विध्यायादित्यदुग्धेन लिखित्वाक्रम्य चाङ्घ्रिणा। तथा भूतेन मन्त्रेण होमः कार्य्यो दिने दिने। पीडितो लज्जया विष्टः सिद्धश्चेन्नहि शोषयेत्॥ बालातृतीयबीजेन पुटितं दुग्धमध्यतः। धारयेल्लिखितं मन्त्रमथवा शोषणं चरेत्॥ द्वाभ्याञ्च वायुबीजाभ्यां लिखेन्मन्त्रं विदर्भितम्। तद्यज्ञभस्मना कण्ठे धारयेदपि साधकः॥ नोचेद्द्वाह्योग्निबीजेन सिद्ध्यर्थं परमेश्वरि। मन्त्रार्णान् वह्निबीजेन चतुर्द्दिक्षु समावृतान्।

लिखेत्पालाशतैलेन धारयेत्कण्ठदेशतः। सिद्धः स्यान्नात्र सन्देहो मन्त्र इत्याह शङ्करः॥

इति श्रीमन् मैथिलजीवनाथकृते दीक्षाप्रकाशे स्वेष्टमन्त्रसिद्धिकथनं सम्पूर्णम्।

## अथ पञ्चायतनी पूजा।

यामले॥ भवानीं तु यदा मध्ये ऐशान्यामच्युतं

यजेत् । आग्नेय्यां पञ्चवक्त्रं च नैर्ऋते गणनायकम् ॥ वायव्यां तपनं चैवं पूजाक्रम उदाहृतः ॥ १ ॥ मध्ये यदा तु गोविन्दमैशान्यां शङ्करं यजेत् । आग्नेय्यां गणनाथं च नैर्ऋत्यान्तपनं तथा ॥ वायव्यामम्बिकां चैव भोगमोक्षप्रदायिकाम् ॥ २ ॥ शङ्करन्तु यदा मध्ये ऐशान्यामच्युतं यजेत् । आग्नेय्यान्तपनं चैव नैर्ऋत्यां गणनायकम् ॥ वायव्यामम्बिकाञ्चैव स्वर्गमोक्षप्रदायिनीम् ॥३॥ आदित्यन्तु यदामध्ये ऐशान्यां शङ्करं यजेत् । आग्नेय्यामम्बिकां देवीं स्वर्गसाधनभूमिकाम्॥४॥गणनाथं यदा मध्ये ऐशान्यां केशवं यजेत् । आग्नेय्यामीश्वरं चैव नैर्ऋत्यां तपनं तथा । वायव्यां पार्वतीञ्चैव पूजयेन्मोक्षसाधिनीम्॥५॥अत्र पूज्यपूजकयोर्म्मध्ये प्राची ज्ञेया । देवतापृष्ठे पश्चिमादिक् देवतादक्षे दक्षिणा देवतावामे उत्तरा ज्ञेया । पूज्यपूजकयोर्म्मध्ये प्राची ज्ञेया विचक्षणैः । पश्चिमा देवतापृष्ठे तद्दक्षे दक्षिणा भवेत् ॥ उत्तरा च भवेद्वामे देवतायाः सुरेश्वरि । तथा च गणेशविमर्शिन्याम् ॥ शम्भौ मध्यगते हरीनिहरभूदेव्यो हरौ शङ्करेभास्येनागसुता रवौ हरगणेशाजाम्बिकाः स्थापिताः । देव्यां विष्णुहरैकदन्तरवयो लम्बोदरेऽजेश्वरेनार्य्याः शङ्करभागतोपि शुभदा व्यस्ताश्च ते हानिदा इति ॥

अथ षोडशोपचारदशोपचारपञ्चोपचाराः यथा । तत्रादौ षोडशोपचारनियमः ॥ आसनं स्वागतं पाद्यमर्घ्य-माचमनीयकम् । मधुपर्काचमनस्नानं वसनाभरणानि च । सुगन्धिसुमनोधूपदीपनैवेद्यचन्दनम् । प्रयोजयेदर्च्चना-यामुपचारास्तु षोडश ॥ कालिकापुराणे षोडशोपचार-नियमः ॥ आसनं पाद्यमर्घ्यं च तत आचमनीयकम् । मधुपर्कं स्नानजलं वस्त्रं चन्दनभूषणम् ॥ पुष्पं धूपं च दीपञ्च नेत्राञ्जनमतः परम् । नैवेद्याचमनीये च प्रद-क्षिणनमस्क्रिये ॥ एते षोडश निर्दिष्टा उपचारास्तु पूर्वतः ।

॥ अथ दशोपचारनियमः ॥

पाद्यमर्घ्यमाचमनीयं गन्धपुष्पं च धूपकम् । दीपं नैवेद्यमित्याहुः पुनराचमनीयकम् ॥ ताम्बूलं च ततो दद्यात्पूजायां सर्वतः सदा ।

॥ अथ पञ्चोपचाराः ॥

अर्घ्यो गन्धं च पुष्पं च नैवेद्याचमनं तथा ॥ द्रव्याभावे तूपचारं पुष्पैः सर्वं प्रकल्पयेत् । अत्र षोड शोपचाराभावे दशोपचाराः । तदभावे पञ्चोपचाराः । तदभावे पुष्पैः सर्वं प्रकल्पयेत् ॥

॥ पुष्पदानाविधिः ॥

पुष्पं वा यदि वा पत्रं फलं नष्टमधोमुखम् ॥ दुःख-

दन्तत्समाख्यातं यथोत्पन्नं तथार्प्पयेदिति ॥ पुष्पाञ्जलौ न दोषः स्यादित्युक्तं शम्भुनाच्र्चने ॥

॥ अर्घ्यादिपात्रनियममाह गौतमः ॥

अर्घ्यस्य त्रीणि पात्राणि पाद्यस्यापि त्रयं भवेत् । तथैवाचमनीयस्य पात्राणि च विभागशः ॥ तथाकरण-दौर्बल्यादेकमेव प्रशस्यते । किन्तुसामान्यविशेषार्घ्यद्वय-स्यावश्यकत्वम् । तथा च तन्त्रान्तरे । एकपात्रं न कर्त्तव्यं यदि साक्षान्महेश्वरः । मन्त्राः पराङ्मुखा यान्ति आपदश्च पदे पदे । इह लोके दरिद्रः स्यान्मृतश्च नरकं व्रजेत् ॥ अथार्घ्यजलेऽष्टगन्धदानस्यावश्यकत्वम् ॥ उक्तं च शार-दायाम् ॥ गन्धाष्टकमिदं दद्यादर्घ्यपात्रे प्रयत्नतः । गन्धा-ष्टकन्तत्त्रिविधं शक्तिविष्णुशिवात्मकम् ॥ चन्दनागुरु-कर्प्पूरचोरकुङ्कुमरोचनाः । जटामांसीकपियुता शक्तेर्ग-न्धाष्टकं विदुः ॥ चन्दनागुरुह्रीवेरकुष्ठकुङ्कुमसेव्यकाः । जटामासीसुरामिति विष्णोर्गधाष्टकं स्मृतम् ॥ चन्दनागु-रुकर्प्पूरतमालजलकुङ्कुमम् । उशीरं कुष्ठसंयुक्तं शैवं गन्धाष्टकं विदुरिति ॥ अर्घ्यं दिशेत्ततो मूर्द्धिन शिरोम-न्त्रेण देशिकः । वारुणेन च मन्त्रेण दद्यादाचमनीयकम् ॥ स्वधेत्याचमनीयञ्च त्रिवारं मुखपङ्कजे । स्वधेति मधु-पर्कं च पुनराचमनीयकम् ॥

॥ अथ षडङ्गं धूपमाह ॥

तन्त्रान्तरे। सिताज्यमधुसंमिश्रं गुग्गुल्वगुरुचन्दनम् ॥ षडङ्गो धूप एषोऽस्ति सर्वदेवप्रियः सदा ॥

॥ अथ दशाङ्गो धूपः ॥

मधुमुस्ताघृतं गन्धो गुग्गुल्वगुरुशैलजम्। सरलं सिंहसिद्धार्थौ दशाङ्गो धूप इष्यते ॥ अथ यामले गन्धपुष्पभूषणदीपदानप्रकारः। निवेदयेत्पुरोभागे गन्धं पुष्पं च भूषणम्। दीपं दक्षिणतो दद्यात्पुरतो वा न पृष्ठत इति॥ वामतस्तु तथाधूपमग्रे वा न च दक्षिणे। नैवेद्यं दक्षिणे भागे पुरता वा न पृष्ठतः ॥ अत्र वामदक्षिणभागो देवताया न तु साधकस्येति। धूपदीपौ सुभोज्यं च देवताग्रे निवेदयेदिति दर्शनात् ॥ अथ घृतयुक्तं दक्षिणे तैलयुक्तं वामे। एवं सितावर्त्तिश्च दक्षिणे रक्ताचेद्वामे प्रशस्ता भवति। तथा यामले ॥ दीपं दक्षे घृतयुक्तं तैलयुक्तं च वामतः ॥ दक्षिणे च सितावर्त्तिर्वामतो रक्तवर्त्तिका ॥ पक्वापक्वविभागेन नैवेद्येष्विति संस्थितिः। पुरतो नियमो नास्ति दीपनैवेद्ययोः क्वचित् ॥ पक्वं दुग्धं च देवतावामे स्थापयेत्। अपक्वमामान्नं दक्षिणे स्थापयेत् ॥ ततो दण्डवत्प्रणमेदिति ॥ अथषोडशोपचाराणां पौराणिका मन्त्रा यथा ॥ तत्रादावासनमन्त्रः ॥ भवानि त्वं महादेवि सर्वसौभाग्य-

दायिके। अनेकरत्नसंयुक्तमासनं प्रतिगृह्यताम् ॥ अथ पाद्यस्य ॥ सुचारु शीतलं दिव्यं नानागन्धसमान्वितम् ॥ गृहाण देवदेवेशि महादेवि नमोऽस्तु ते ॥ अथार्घ्यस्य ॥ शिवप्रिये महाभागे शङ्करप्रियवादिनि। अर्घ्यं गृहाण कल्याणि कृपया परमेश्वरि ॥ तत आचमनमन्त्रः ॥ पवित्रं जलमानीतं सुवर्णकलशे स्थितम्। आचम्यतां महाभागे हरेण सहितेऽनघे ॥ अथ स्नानमन्त्रः। गङ्गासरस्वतीरेवा कावेरीनर्म्मदाजलैः॥ स्नापितासि मया देवि तथा शान्तिं प्रयच्छ मे ॥ अथ वस्त्रस्य ॥ सर्वसत्वाधिके रम्ये लोकल- ज्जानिवारणे। मयोपपादिते तुभ्यं वाससी प्रतिगृह्यताम् ॥ अथ चन्दनस्य ॥ कर्प्पूरागुरुसङ्घृष्टं कुङ्कुमादिसमन्वि- तम्। कस्तूरिकासमायुक्तं चन्दनं प्रतिगृह्यताम्। अथा- क्षतमन्त्रः ॥ रञ्जिताः कुसुमौघेन अक्षताश्चातिशोभनाः। ममैषां देवि दानेन प्रसन्ना भव पार्वति। अथ भूषणम- न्त्रः ॥ भूषणानि विचित्राणि मणिमुक्तामयानि वै। गृहा- णपरया प्रीत्या सर्वकामप्रदायिनि। अथ पुष्पस्य ॥ सन्म- ल्लिकावकुलचम्पकपाटलाब्जपुन्नागजातिकरवीररसालपु- ष्पैः। विल्वप्रवालविविधामलमालतीभिस्त्वां पूजयामि- जगदीश्वरि मे प्रसीद ॥ अथ धूपमन्त्रः ॥ देवद्रुमरसो- द्भूतः कालागुरुसमन्वितः। आनीतोऽयं मया धूपो भवानि

प्रतिगृह्यताम् ॥ अथ दीपस्य । त्वं ज्योतिः सर्वदेवानां तेजसांतेज उत्तमम् । आत्मज्योतिः परं धाम दीपोऽयं प्रतिगृह्यताम ॥ अञ्जनदानमन्त्रः ॥ नेत्रद्वयं महादेवि भूषयामलकज्जलैः ॥ सुरासुरकृपाराशे मां पाहि परमेश्वरि ॥ अथ नैवेद्यस्य ॥ अन्नं च विविधं स्वादुरसैः षड्भिः समन्वितम् । भक्ष्यभोज्यसमायुक्तं नैवेद्यं प्रतिगृह्यताम् ॥ तत आचमनीयं पूर्ववत्। अथ ताम्बूलमन्त्रः ॥ कर्प्पूरैलालवङ्गादिताम्बूलदलसंयुतम् । क्रमुकस्य फलञ्चैव ताम्बूलं प्रतिगृह्यताम् ॥ तत आरार्त्तिकं दद्यात् ॥ चन्द्रादित्यौ च धरणी विद्युदग्निस्तथैव च । त्वमेव सर्वतेजांसि आर्त्तिक्यं प्रतिगृह्यताम् ॥

इति पौराणिकषोडशोपचाराः ॥

अथ तान्त्रिकषोडशोपचारनियमः ॥ तत्रादौ स्वागतवाक्यम् ॥ कृतार्थोऽनुगृहीतोऽस्मि सफलं जीवितं मम । आगता देवदेवेशि स्वस्वागतमिदं पुनः ॥ अथ पाद्यम् ॥ श्यामाकविष्णुक्रान्ताब्जदूर्वाःपाद्यजले क्षिपेत् । मूलश्लोकैर्न्नमोमन्त्रैः पाद्यं पादाम्बुजेऽर्पयेत् ॥ यद्भक्तिलेशसम्पर्कात्परमानन्दसम्भवः । तस्मै ते चरणाब्जाय पाद्यं सङ्कल्पयाम्यहम् ॥ अथाचमनम् ॥ तत्र लवङ्गजातिकङ्कोलं प्रक्षिप्य मुखे दद्यात् ॥ मन्त्रः ॥ वेदानामपि वेदाय देवानां

देवतात्मने। आचामं कल्पयामीशे शुद्धानां शुद्धिहेतवे ॥ अथार्घपात्रे दूर्वातिलदर्भसर्षपाक्षतपुष्पाणि दत्वार्घ्यं प्रकल्पयेत्। मूर्द्धिन ॥ मन्त्रो यथा ॥ तापत्रयहरं दिव्यं परमानन्दलक्षणम्। तापत्रयविनिर्म्मुक्तं तवार्घ्यं कल्पयाम्यहम् ॥ अथ मधुपर्कमन्त्रः ॥ सर्वकालुष्यहीनायै परिपूर्णसुखात्मने॥ मधुपर्कमिदं देवि कल्पयामि प्रसीद मे पुनराचमनमन्त्रः ॥ उच्छिष्टोप्यशुचिर्वापि यस्य स्मरणमात्रतः। शुचिमाप्नोति तस्यैते पुनराचमनीयकम् ॥ स्नानवस्त्रोपवीतान्ते नैवेद्यान्तेपि तत्स्मृतम्। पाद्यादिद्रव्याभावे तु तत्स्मरन्नक्षतान् क्षिपेत् ॥ अथ गन्धतैलदानमन्त्रः ॥ स्नेहं गृहाण स्नेहेन भक्तानामर्थसिद्धिदे। सुरासुरार्चिते देवि ददामि स्नेहमुत्तमम् ॥ अथ स्नानम्॥ परमानन्दबोधाब्धे दयार्द्रे सुरपूजिते। साङ्गोपाङ्गमिदं स्नानं कल्पयामि हरप्रिये ॥ ततः सहस्रमुख्येन शतं वा शक्तितोपि वा। गन्धयुक्तजलैर्देवीमभिषिञ्चेन्मनुं जपन् ॥ ततः ॥ पठन् मूलं ततः श्लोकौ दद्याद्वस्त्रोपवीतके। नानारागविचित्रं तु मुक्तामणिसमाकुलम् ॥ निरावरणविज्ञानं वासस्ते कल्पयाम्यहम्। यमाश्रित्य महामाया जगत्सम्मोहिनी सदा॥तस्यै ते परमेश्वर्य्यै कल्पयाम्युत्तरीयकम्। अथ भूषणमन्त्रः ॥ नानाशक्त्याश्रये देवि सुन्दराङ्गि

सुरेश्वरि । भूषणानि विचित्राणि कल्पयाम्यमरार्च्चिते ॥ अथ गन्धमन्त्रः ॥ पात्रस्थं गन्धं कनिष्ठयार्प्पयेत् ॥ अनेन ॥ परमानन्दसौरभ्यपरिपूर्णदिगन्तरे ॥ गृहाण परमं गन्धं कृपया परमेश्वरि ॥ अयं गन्धोऽमुकदेवतायै नमः ॥ ततः कनिष्ठाङ्गुष्ठाभ्यां गन्धमुद्रां प्रदर्शयेत् ॥ ततःपुष्पमन्त्रः । मूलमुच्चार्य्य पुष्पाण्यादाय ॥ तुरीयवनसम्भूतं नानागुणमनोहरम् । अमन्दसौरभं पुष्पं गृह्यतामिदमद्भुतम् ॥ एतानि पुष्पाणि अमुकदेवतायै वौषट् । ततस्तर्ज्जन्यङ्गुष्ठाभ्यां पुष्पमुद्रां दर्शयेत् । अथ विशेषः ॥ अक्षतानर्कधत्तूरौ विष्णौ नैवार्प्पयेत्सुधीः । बन्धूकं केतकीं कुन्दं केसरं कुटजं जपाम् ॥ शङ्करे नार्प्पयेद्विद्वान् मालतीं यूथिकामपि । शक्तौ दूर्वार्कमन्दारान्मालूरन्तगरं रवौ ॥ विनायके तु तुलसीं नार्पयेज्जातुचिद्बुधः । एवं पुष्पपूजां विधायावरणदेवतार्च्चनं कुर्य्यात् ॥ तत आवरणदेवतार्च्चनं समर्प्पयेदनेन ॥ अभीष्टसिद्धिं मे देहि शरणागतवत्सले । भक्त्या समर्प्पये तुभ्यमिदमावरणार्च्चनामिति ॥ ततः करं प्रक्षाल्य उपचारान्तरं कल्पयेत् । ततो देवतावामभागे धूपपात्रं स्थापयेत् ॥ ततो धूपपात्रं फडिति प्रक्षाल्य नम इति पुष्पं दत्वा वामतर्ज्जन्या संस्पृश्य मूलं श्लोकं च । वनस्पतिरसो दिव्यो गन्धाढ्यो

गन्ध उत्तमः। आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम्॥ इति पठित्वा साङ्गायै सपरिवारायै स्वेष्टदेवतायै धूपं समर्पयामि नम इति शङ्खजलं भूमौ प्रक्षिप्य तर्ज्जन्यङ्गुष्ठयोगेन धूपमुद्रां प्रदर्श्य जयध्वनिमन्त्रः ॥ मातः स्वाहेति घण्टां सम्पूज्य वामहस्तेन तां वादयन् देवतागुणान्कीर्त्तयन् दक्षिणहस्तेन देवतां नाभिदेशतो धूपयेत् ॥ अथ दीपविधिः ॥ देवस्य दक्षिणे भागे घृतदीपः ॥ देवतावामभागे तैलदीपः स्थाप्यः॥ ततो दीपपात्रं फडिति सम्प्रोक्ष्य नम इति पुष्पं दत्वा वाममध्यमयास्पृशन् मूलमुच्चार्य्य। स्वप्रकाशो महान्दीपः सर्वत्र तिमिरापहः सबाह्याभ्यन्तरं ज्योतिर्द्दीपोऽयं प्रतिगृह्यताम् ॥ साङ्गायै सपरिवारायै अमुकदेवतायै दीपं दर्शयामि नमः शङ्खस्थजलं भूमौ प्रक्षिप्य मध्यमाङ्गुष्ठयोगेन दीपमुद्रां प्रदर्श्य पूर्ववद्घण्टां वादयन्। नेत्रादिपादान्तं दीपं प्रदर्शयेत् ॥ अथ नैवेद्यदानम् ॥ नैवेद्यं पात्रे निधाय मूलेन सम्प्रोक्ष्य चक्रमुद्रयाभिरक्ष्य द्वादशवारं वायुबीजाभिमन्त्रितैर्ज्जलैः प्रोक्ष्य तदुत्थवायुना तद्दोषं संशोष्य दक्षिणकरतले वह्निबीजं विचिन्त्य तत्पृष्ठलग्नं वामकरतलं कृत्वा तदुत्थाग्निना नैवेद्यदोषं संदह्य वामकरे अमृतं ध्यात्वा वामपृष्ठे दक्षिणंकरं कृत्वा प्रदर्श्य तदखिलममृ-

तात्मकं ध्यात्वा तत्स्पृष्ट्वा मूलमन्त्रमष्टधा जप्त्वा धेनुमुद्रां प्रदर्श्य जलगन्धपुष्पैरभ्यर्च्य देवतायै पुष्पाञ्जलिं समर्प्य तन्मुखात्तेजोविनिर्गतं ध्यात्वा वामाङ्गुष्ठेन नैवेद्यपात्रं स्पृष्ट्वा दक्षिणेन गृहीत्वा मूलमुच्चार्य्य सत्पात्रसिद्धं सुहविर्विविधानेकभक्षणम्। निवेदयामि देवेशि सानुगा-त्वं गृहाण तामिति श्लोकं सञ्जप्य साङ्गायै सपरिवारायै श्रीमदमुकदेवतायै नैवेद्यं समर्प्पयामि नम इति जलमु-त्सृज्य अङ्गुष्ठानामिकाभ्यां नैवेद्यमुद्रां दर्शयेत्। ततः अमृतोपस्तरणमसि स्वाहेति देव्याहस्ते जलं दद्यात्। ततो वामकरेण विकचोत्पलसदृशीं ग्रासमुद्रां प्रदर्श्य द-क्षिणकरेण समन्त्रकं प्राणादिमुद्रां प्रदर्शयेत्। यथा। ओं प्राणाय स्वाहा। अङ्गुष्ठकनिष्ठानामिकाभिः। ओं अपानाय स्वाहा। अङ्गष्ठतर्ज्जनीमध्यमाभिः। ओं व्यानाय स्वाहा। अनामामध्यमाङ्गुष्ठैः। ओं उदानाय स्वाहा। अङ्गुष्ठतर्ज्जनीमध्यमानामाभिः। ओं समानाय स्वाहा। सर्वाभिरिति। अथ ब्रह्मेशाद्यैः स्तुतां देवकन्या-भिः सुधांशुचामरैः परिवीज्यमानां भोक्तृगणान् हासय-न्तीं देवीं ध्यायेत्। अत्रावसरे पूजाङ्गहोमं कुर्य्यात्। अथ होमस्य नित्यता सोमभुजगावल्याम्॥ नाजप्तः सिध्यते मन्त्रा नाहुतश्च फलप्रदः। नानिष्टो यच्छते कामान् त-

स्मात् त्रितयमर्च्चयेत् ॥ पूजायां लभ्यते पूजा जपात्सिद्धिर्न्नसंशयः। विभूतिश्चाग्निकार्य्येण सर्वसिद्धिर्न्न संशयः॥ तदुक्तम्॥ स्थण्डिलेऽग्निमुपाधाय वैश्वदेवक्रियां चरेत्। मूलेन वीक्ष्य चास्त्रेण कृत्वा प्रोक्षणताडनम्॥ कुशैस्तद्वर्म्मणाभ्युक्ष्य पूर्ववत्स्थापयेच्छुचिम्। तन्मन्त्रेण तमभ्यर्च्याहूय तत्रेष्टदेवताम्॥ पूजयेद्गन्धपुष्पैस्तां महाव्याहृतिभिस्ततः। हुत्वा व्यस्तसमस्ताभिराहुतीनां चतुष्टयम्॥ अन्नैर्मुलेन जुहुयात्पञ्चविंशतिसङ्ख्यया। पुनर्व्याहृतिभिर्हुत्वा मूर्त्तौ देवीं नियोजयेत्॥ वह्निं विसृज्य देवाय दद्यादाचमनीयकमिति। अथ तत्रात्मदक्षिणहस्तप्रमाणं चतुरङ्गुलमुन्नतं स्थण्डिलं कृत्वा मूलेन वीक्ष्य फडिति प्रोक्ष्य तैरेव कुशैः सन्ताड्य हुमिति मन्त्रेणाभ्युक्ष्य मूलेनाग्निमादाय तदंशं गृहीत्वा नैर्ऋतकोणे ऊँ क्रव्यादेभ्यो नम इति क्षिपेत्। ततो मूलेनाग्निं स्थापयित्वा वमित्यमृतीकृत्य हुमित्यवगुन्ठ्य फडिति संरक्ष्य। ऊँ। वैश्वानरजातवेद इहावहलोहिताक्ष सर्वकर्म्माणि साधय स्वाहेति वह्निं सम्पूज्य तत्रेष्टदेवतामावाह्य सम्पूज्य आज्येन। ऊँ भूः स्वाहा। ऊं भुवः स्वाहा। ऊं स्वः स्वाहा। ऊं भूर्भुवः स्वः स्वाहा। इति हुत्वा मूलमन्त्रेण पञ्चविंशतिसङ्ख्याकं हुत्वा पुनर्व्याहृतिभिर्हुत्वा मूर्त्तौ दे

वतां संयोज्याग्निं विसर्ज्जयेदिति । भो भो वह्ने महाशक्ते सर्वकर्मप्रसाधक । कर्म्मान्तरेऽपि सम्प्राप्ते सान्निध्यं कुरु-सादरमिति ॥ विसर्ज्जनं कृत्वा देवतायै आचमनं दत्वा तन्मुखागतन्तेजः पुनस्तन्मुखे निर्गतमिति विचिन्त्य पुष्पाञ्जलिं दत्वा प्रणम्य जपं कुर्य्यात् । तद्यथा । ऋ-ष्यादिन्यासं विधाय मूर्ध्नि कुलकां विचिन्त्य दशधा प्र-जप्य सम्पूज्य जपमालामानीय क्वचित्पात्रेऽर्घ्योदकेना-भ्युक्ष्य । ॐ माले माले महामाले सर्वशक्तिस्वरूपिणि । चतुर्वर्गस्त्वयिन्यस्तस्तस्मान्मे सिद्धिदा भवेतिगन्धादिना सम्पूज्य । अविघ्नं कुरु मालेत्वमिति मन्त्रेण दक्षिण-हस्तेन गृहीत्वा शिरसि गुरुं हृदये स्वेष्टदेवतां ध्यायन् हृदयसमीपं मालामानीय दक्षहस्तमध्यमामध्यपर्वणि सं-स्थाप्य प्रणवमुच्चार्य्य मूलमन्त्रं जपेत् । पुनरोमित्युच्चार्य्य जपं समाप्य । त्वंमाले सर्वदेवानां प्रीतिदा शुभदा मता । शुभं कुरुष्व मे भद्रे यशोवीर्य्यञ्च सर्वदा ॥ ह्रीं सिद्ध्यै नम इति स्वशिरसि मालां संस्थाप्य पुनः प्राणायामत्रयं कृत्वा ऋष्यादिषडङ्गन्यासं विधाय देव्या वामहस्ते अर्घ्यो-दकेन । गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपम् । सिद्धिर्भवतु मे देवि त्वत्प्रसादान्महेश्वरीति जपं समर्प्य देव्यग्रे पुष्पाञ्जलिं प्रक्षिपेत् । ततो मालां स्थापयेत् ।

ततः कवचादिकं पठित्वा पुष्पाञ्जलिं दत्वा । इतः पूर्वं यत्कृतं यदुक्तं तत्सर्वममुकदेवता ब्रह्मार्प्पणमस्तु । ततः शान्तिपाठं विधाय वामभागे निर्म्माल्य वासिना निर्म्माल्येन सम्पूज्य यन्त्रलेपं शिरसि दत्वा निर्म्माल्यं विहरेदिति ॥

इति श्रीजीवनाथकृते दीक्षाप्रकाशे षोडशोपचारः समाप्तः ॥

॥ अथ कुलुका ॥

श्रीदेव्युवाच । कुलुका कीदृशी देव सेतुर्वा नाथ कीदृशः । कीदृशो वा महासेतुर्न्निर्वाणमपि कीदृशम् ॥ अन्यद्वा कथितं देव कीदृशं तद्वद प्रभो ॥ ईश्वर उवाच ॥ गुह्याद्गुह्यतरं देवि तव स्नेहेन कथ्यते । विना येन महेशानि निःफलन्तु जपादिकम् ॥ तारायाः कुलुका देवि महानीलसरस्वती । पञ्चाक्षरी कालिकायाः कुलुका परिकथ्यते ॥ कालीकूर्च्चं वधूर्म्माया फडन्तं परमेश्वरि । छिन्नायाः परमेशानि कुलुका त्र्यक्षरी भवेत् ॥ वज्रवैरोचनीये च अन्ते वर्म्म प्रकीर्त्तयेत् । सम्पत्प्रदायाः प्रथमं भैरव्याः कुलुका मता ॥ श्रीमत्त्रिपुरसुन्दर्य्याः कुलुका द्वादशाक्षरी । वाग्भवं प्रथमं बीजं कामराजमतः परम् ॥ लज्जाबीजं ततः पश्चात्त्रिपुरेशी ततः परम । भगवतीति

पदं दद्यादन्ते ठद्वयमुच्चरेत् ॥ अन्यासान्तु महादेवि त्र्यक्षरी कुलुका मता। तारं कूर्च्चं समुच्चार्य नारसिंहं समुच्चरेत् ॥ इत्येषा कथिता देवि संक्षेपात्कुलुका मया। अज्ञात्वा कुलुकां देवि प्रजपेद्यो नराधमः ॥ पञ्चत्वमाशु लभते सिद्धिहानिश्च जायते। मन्त्राः पराङ्मुखा यान्ति मन्त्रहानिः प्रजायते॥ तथा जपादिकं सर्वं निष्फलं नात्र संशयः। यस्मात्सर्वप्रयत्नेन योजयेन् मूर्द्ध्नि कुल्लकाम्। तस्याशु मन्त्रसिद्धिः स्यान्नान्यथा परमेश्वरि। तारायाः। ह्रीं स्त्रीं हूं। कालिकायाः। क्रीं हूं स्त्रीं ह्रीं फट्। छिन्नमस्तायाः। ॐ हूं क्ष्रौं। त्रिपुरभैरव्याः। वज्रवैरोचनीये हूं। श्रीत्रिपुरसुन्दर्य्याः॥ ऐं क्लीं ह्रीं त्रिपुरेशि भगवति स्वाहा॥ अन्यासां विद्यानाम्। ॐ हूं क्ष्रौं इति कल्लुका ज्ञेया॥ सर्वासां विद्यानां सेतुः प्रणव एव हृदये चिन्त्यः। महासेतुस्तु मूलमन्त्रः। स च कण्ठदेशे जाप्तव्यः। निर्वाणस्तु। ॐ अं मूलं ऐं अं आं इं ईं उं ऊं ऋं ॠं लृं ॡं एं ऐं ओं औं अं अः कं खं गं घं ङं चं छं जं झं ञं टं ठं डं ढं णं तं थं दं धं नं पं फं बं भं मं यं रं लं वं शं षं सं हं ळं क्षं ॐ इति निर्वाणं नाभिदेशे चिन्त्यमिति। उक्तं च महातन्त्रे॥ ॐ सेतुः सर्वविद्यानां महासेतुश्च मूलकम्। प्रणवं पूर्वमुद्धृत्य स्वराद्यं तदन-

T

न्तरम् । वाग्भवञ्च ततो देवि मातृकां तदनन्तरम् । ऊँ कारमन्त्रे निर्वाणं सुरेश्वरि विचिन्तयेत् ॥ हृदये सेतुमाजप्य कण्ठदेशे सुरेश्वरि । महासेतुं ततो नाभौ निर्वाणं परिचिन्तयेत् ॥ ततः षडङ्गन्यासञ्च कृत्वा ध्यात्वा मनुं जपेत् । एवं कृते सुरेशानि मन्त्रसिद्धिः प्रजायते ॥

इति श्रीदीक्षाप्रकाशे रहस्यप्रकारः ॥

अथ शिवाबलिप्रकारः ॥ तथा च कुलचूडामणौ अवश्यमन्नदानेन नियतं तोषयेच्छिवाम् । नित्यश्राद्धं यथा सन्ध्या चन्दनं पितृतर्पणम् ॥ तथैव कुलदेवीनां नित्यता कुलपूजने । पशुरूपां शिवां देवीं यो नार्चयति निर्ज्जने ॥ शिवाशावेण तस्याशु सर्वे नश्यन्ति निश्चितम् ॥ हेशाजपपूजाविधानेन यत्किञ्चित्सुकृतानि वै । गृहीत्वा शापकं महान्दत्वा शिवा रोदिति निर्ज्जने ॥ एकया भुज्यते यत्र शि. कथ्यतेयया यदि भैरवि । तदैव सर्वशक्तीनां प्रीतिः परमदुर्ल्लभा ॥ ह्राग राज्यादिभयमापन्ने देशान्तरभयादिके । शुभाशुभानि कर्म्माणि विचिन्त्य वलिमाहरेत् ॥ बिल्वमूले प्रान्तरे वा श्मशाने नगराद्बहिः । मांसप्रधानं नैवेद्यं सन्ध्याकाले निवेदयेत् ॥ कालि कालीति वक्तव्ये तत्रोमा शिवरूपिणी । पशुरूपधरा याति परिवारगणैः सह ॥ अथोत्तराभिमुखो भूत्वा सङ्कल्पं कुर्य्यात् । ऊँ अस्यां सन्ध्यायाममुकगोत्रः

श्रीमदमुकशर्म्मामुककार्य्यशुभाशुभार्थं शिवाबलिमहङ्करिष्ये। इति सङ्कल्प्य प्राणायामं कृत्वा षडङ्गन्यासञ्च कृत्वार्घ्यं स्थापयित्वा भक्ष्यान्नं गृहीत्वा मुक्तकेशः शनैः शिवा आवाहयेत् ॥ कालिकालीति मन्त्रेण। ततः गृहाण देवि महाभागे शिवे कालाग्निरूपिणि। शुभाशुभफलं व्यक्तं ब्रूहि गृहाण बलिन्तव ॥ इत्यर्घ्योदकेन उत्सृज्य ततः किञ्चिदपसृत्य शिवासु भक्षयन्तीषु। ॐ संहारभैरवाय नमः १। ॐ बटुकेभ्यो नमः २। ॐ विनायकेभ्यो नमः ३। ॐ मातृभ्यो नमः ४। ॐ क्षौं क्षेत्रपालेभ्यो नमः ५। ॐ योगिनीभ्यो नमः ६। ॐ डाकिनीभ्यो नमः ७। ॐ शिवदूतीभ्यो नमः ८। इति नत्यष्टकं दत्वा गन्धपुष्पाञ्जलिमादाय मुक्तकेशी दिगम्बर उत्थाय निमीलिताक्षः स्तुतिं पठेत्। शिवारूपधरे देवि गुह्यकालि नमोस्तु ते। उल्कामुखि ललज्जिह्वे घोररावे शृगालिनि ॥ श्मशानवासिनि प्रेते शवमांसप्रियेऽनघे॥ अरण्यचारिण्यनघे शिवे जम्बूकरूपिणि। नमोऽस्तु ते महामाये जगत्तारिणि कालिके॥ मातङ्गि कुक्कुटे रौद्रि महाकालि नमोस्तु ते। सर्वसिद्धिप्रदे भीमे भयङ्करि भयापहे॥ प्रसन्ना भव देवेशि मम भक्तस्य चण्डिके। संसारतारणपरे जय सर्वशुभङ्करि॥ विध्वस्तचिकुरे चण्डि चामुण्डे मुण्डमालिनि।

संहारकारिणि क्रुद्धे सर्वसिद्धिं प्रयच्छ मे ॥ दुर्गे किराति. शबरि प्रेतासनगतेऽभये । अनुग्रहं कुरु सदा कृपया मां विलोकय ॥ राज्यं प्रयच्छ विकटे वित्तमायुः सुतां स्त्रियम्। शिवाबलिप्रदानने त्वं प्रसन्ना भवेश्वरि॥नमस्तेस्तु नमस्ते-स्तु नमस्तेस्तु नमोस्तु ते ॥ इति पठित्वा भुक्तशेषान्नं तद्भाजनं च भूमौ निखनेत् । अथ भोजनकाले शुभाशुभफलं शिवाशब्दानुसारेण ज्ञातव्यम् ॥ तदुक्तं तत्रैव ॥ भुक्त्वा रौति यदैशान्यां मुखमुत्तोल्पसुस्वरम् ।तदैव मङ्गलं विद्यान्नान्यथा कुलपूजनम् ॥ यदा न भुज्यते वस्तु तदानैव शुभं भवेत् । शुभं यदि भवेत्तत्र भुज्यते तदशेषतः ॥ अत्र सात्विको ब्राह्मणः मांसस्थाने माषवटकं दद्यात् ॥ सात्विको जीवहत्याञ्च न कदाचित्प्रकारयेदित्युक्तेः ॥ ततो गृहमागत्य देवीं पूजयेत् ॥

अथानुकल्पद्रव्याणि यथा ॥

शक्तिसङ्गमतन्त्रे ॥ माहिषत्वेन कूष्माण्डं छागत्वेन च कर्कटीम् । वृन्ताकं कुक्कुटत्वेन मेषत्वेन च तुम्बिकाम्। मानुषत्वे न पनसं मत्स्यत्वेनेक्षुदण्डकम् । शूरणञ्च खरत्वेन दातव्यं कोशकं मृगे ॥ पायसं तु गजत्वेन मार्ज्जारत्वे कुलुत्थकम् । पटोलं शूकरत्वेन शर्करां वालुकन्तथा ॥ खड्गत्वेन महेशानि मत्स्यत्वे कदलीफलम् । मुषकत्वे

मूलकं च सारसत्वे कलिङ्गकम्। कीरत्वे नारिकेलञ्च मत्स्यत्वे कदलीं च वा। माषाः सर्वबलित्वेन कृशरा- न्नन्तथा मतमिति॥

इति श्रीजीवनाथकृते दीक्षाप्रकाशे शिवाबलि- प्रकारः समाप्तः॥

॥ अथ विष्णोर्वैदिकषोडशोपचारप्रकारः॥

तत्रादावासनमन्त्रः॥ ॐ सहस्रशीर्षापुरुषः सहस्राक्षःसहस्रपात् सभूमि ँ सर्वतस्पृत्वात्यतिष्ठद्दशाङ्गुलम्। उपवेशनमन्त्रः। पुरुष एवेद ँ सर्वं यद्भूतं यच्च भाव्यम्। उतामृतत्वस्येशानो यदन्नेनातिरोहति॥ अथ पाद्यमन्त्रः। एतावानस्य महिमातो ज्यायाँश्च पुरुषः पादोस्य विश्वाभूतानि त्रिपादस्यामृतं दिवि॥ अर्घ्यमन्त्रः। त्रिपादूर्ध्व उदैत्पुरुषः पादोस्येहा भवत्पुनः। ततो विष्वङ्व्यक्रा मत्साशनानशने अभि॥ आचमनमन्त्रः॥ ततो विराडजायत विराजो अधिपुरुषः। स जातो अत्यरिच्यत। पश्चाद्भूमिमथोपुरः। स्नानमन्त्रः॥ तस्माद्यज्ञात्सर्वहुतः सम्भृतं पृषदाज्यम्॥ पशूँस्ताँश्चक्रे वायव्या नारण्या ग्राम्याश्च ये॥ अथाच्छादनमन्त्रः॥ तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे। छन्दा ँसि जज्ञिरे तस्माद्यजुस्तस्मादजायत॥ यज्ञोपवीतमन्त्रः॥

तस्मादश्वा अजायन्त ये के चोभयादतः॥ गावो हि जज्ञिरे तस्मात् तस्माज्जाता अजावयः॥ गन्धमन्त्रः॥ तं यज्ञम्बर्हिषिप्रौक्षम्पुरुषं जातमग्रतः। तेन देवा अयजन्त साध्या ऋषयश्च ये॥ अथ पुष्पमन्त्रः॥ यत्पुरुषं व्यदधुः कतिधाव्यकल्पयन्। मुखं किमस्यासीत्किम्बाहू किमूरू पादा उच्यते। धूपमन्त्रः॥ ब्राह्मणोस्य मुखमासीद्बाहू राजन्यः कृतः॥ ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत॥ अथ दीपमन्त्रः॥ चन्द्रमा मनसोजातश्चक्षोः सूर्यो अजायत। श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत॥ नैवेद्यमन्त्रः॥ नाभ्याआसीदन्तरिक्षꣳ शीर्ष्णोद्यौः समवर्त्तत। पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकानकल्पयन्॥ अञ्जलिकरणमन्त्रः। यत्पुरुषेण हविषा देवा यज्ञमतन्वत। वसन्तोस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः॥ अथ प्रदक्षिणामन्त्रः॥ सप्तास्यासन् परिधयः त्रिःसप्त समिधः कृताः॥ देवा यद्यज्ञं तन्वना अबध्नन् पुरुषं पशुम्। अथ विसर्ज्जनमन्त्रः॥ यज्ञेन यज्ञमयजन्तदेवास्तानि धर्म्माणि प्रथमान्यासन् तेहनाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः॥

इति दीक्षाप्रकाशे विष्णोः षोडशोपचारप्रकारः॥

अथ सप्तशतीपाठविधिमाह। वाराहीतन्त्रे। आ.

T-

धारं स्थापयित्वा तु पुस्तकं वाचयेत्ततः। हस्तसंस्थापनाद्देवि भवेदर्द्धफलं यतः॥ यावन्न पूर्य्यतेऽध्यायः तावन्न विरमेत्पठन्। यदि प्रमादादध्याये विरामो भवति प्रिये॥ पुनरध्यायमारभ्य पठेत्सर्वं मुहुर्मुहुः। अनुक्रमात्पठेद्देवि शिरःकम्पादिकन्त्यजेत्॥ तथान्यत्रापि॥ प्रणवं पूर्वमुच्चार्य्य स्तोत्रं वा संहितां पठेत्। अन्ते च प्रणवं दद्यादित्युवाचादिपूरुषः॥ न मानसं पठेत्स्तोत्रं वाचिकन्तु प्रशस्यते। न स्वयं लिखितं स्तोत्रं नाब्राह्मणलिपिं पठेत्। न च स्वयं कृतं स्तोत्रं तथान्येन च यत्कृतम्। यतः कलौ प्रशंसन्ति मुनिभिर्भावितं च यत्॥ अन्यच्च॥ स्वयन्तु लिखितं यच्च कृतिनालिखितन्तु यत्। अब्राह्मणेन लिखितं तत्सर्वं निष्फलं भवेत्। ऋषिश्छन्दोदेवतादिन्यस्य स्तोत्रं पठेद्बुध इति। कीलकग्रन्थे तु। अष्टम्यां वा चतुर्दश्यां कृष्णायान्तु समाहितः। ददाति प्रतिगृह्णाति नान्यथैषा प्रसीदतीति॥ इत्थं रूपेण कीलेन महादेवेन कीलितमिति। अर्गलं कीलकं चादौ जपित्वा कवचं पठेत्॥ जपेत्सप्तशतीं पश्चात्क्रम एष शिवोदित इति। ओं अस्य प्रथमचरित्रस्य ब्रह्मा ऋषिर्गायत्रीच्छन्दो महाकाली देवता नन्दजा शक्तिः रक्तदन्तिका बीजमग्निस्तत्वं महाकालीप्रीत्यर्थं जपे विनि-

योगः। इत्युक्त्वा प्रथमाध्यायं पठेत्। ततः। ओं मध्यमचरित्रस्य विष्णुर्ऋषिरुष्णिक्छन्दोलक्ष्मीर्देवता शाकम्भरीशक्तिर्दुर्गाबीजं वायुस्तत्वं महालक्ष्मीप्रीत्यर्थं जपे विनियोगः। इति पठित्वा द्वितीयाध्यायं तृतीयाध्यायं चतुर्थाध्यायं पठेत्। तत उत्तरचरित्रस्य रुद्रऋषिः त्रिष्टुपछन्दः महासरस्वतीदेवता क्लीं बीजं रविस्तत्वं महासरस्वतीप्रीत्यर्थे जपे विनियोगः। उक्तञ्च। सप्तशत्याश्चरित्रे तु प्रथमे पद्मभूर्मुनिः। छन्दो गायत्रमुदितं महाकाली तु देवता॥ वाग्बीजं पावकस्तत्वं धर्म्मार्थे विनियोजनम्। वागैबीजं पावकं रमिति॥ मध्यमे तु चरित्रे तु मुनिर्विष्णुरुदाहृतः। उष्णिक्छन्दो महालक्ष्मीर्देवता बीजमद्रिजा॥ वायुस्तत्वं धनप्राप्त्यै विनियोग मुदाहृतम्। अद्रिजा ह्रीं वायुर्बीजं यमिति॥ उत्तरस्य चरित्रस्य ऋषिः शङ्कर ईरितः। त्रिष्टुपछन्दो देवतास्य महापूर्वा सरस्वती॥ कामो बीजं रविस्तत्वं कामाप्त्यै विनियोजनम्। कामः क्लीमिति। रविर्बीजं प्रणवमिति मन्त्रविदः॥ एवं संस्मृत्य ऋष्यादीन्ध्यात्वा पूर्वोक्तमार्गतः। स्मरन्नर्थं पठेच्चण्डीस्तवं स्पष्टवदक्षरम्॥ समाप्तौ तु महालक्ष्मीं ध्यात्वा कृत्वा षडङ्गकम्। जपेदष्टशतं मूलं देवतायै निवेदयेत्॥ आदावप्यष्टशतं प्रजपेन्मूलमत्र तु।

मूलमन्त्रस्तु ॥ ऐं ह्रीं क्लीं चामुण्डायै विच्चे ॥ रुद्रयामले। प्रथमं चरितं प्रोक्तं मधुकैटभघातनम् ॥ द्वितीयं विद्धि चरितं महिषासुरघातनम् ॥ उत्तरं चरितं ज्ञेयं शुम्भदैत्यवधान्वितम्। चरितानि जपेत्त्रीणि सरहस्यान्यतन्द्रितः ॥ अन्यत्रापि ॥ शतमादौ शतञ्चान्ते जपेन्मन्त्रं नवाक्षरम् ॥ चण्डीसप्तशतीमध्ये सम्पुटोऽयमुदाहृतः। सकामः सम्पुटो जाप्यो निष्कामः सम्पुटं विना॥ अथ मारीचकल्पे॥ रात्रिसूक्तं जपेदादौ मध्ये सप्तशतीस्तवम्। प्रान्ते तु जपनीयं वै देवीसूक्तमिति क्रमः॥ एवं सम्पुटितं स्तोत्रं सर्वकामार्थसिद्धिदम् ॥ अत्र रात्रिसूक्तं देवीसूक्तं च वैदिकमिति ॥ वस्तुतस्तु सप्तशतीस्तोत्रान्तर्गतमेवाति प्रामाणिकाः। ब्रह्मणा तु कृतं स्तोत्रं विश्वेश्वरीसूक्तं तदेव रात्रिसूक्तमिति व्यवह्रियते। अथ नमोदेव्यै महादेव्यै शिवायै सततं नम इत्यादि सर्वापदोभक्तिविनम्रमूर्त्तिभिरित्यन्तं देवीसूक्तमिति। शक्रादयः सुरगणा इत्यारभ्यास्माकमुन्मदसुरारिभवन्नमस्ते इत्यन्तं लक्ष्मीसूक्तमिति। देव्याहते तत्र महासुरेन्द्रे इत्यारभ्य त्रैलोक्यवासिनामीड्ये लोकानां वरदा भव इत्यन्तं सरस्वतीसूक्तमिति ॥ अथ वाराहीतन्त्रे ॥ संस्कृत्य भूमिं संस्थाप्य कलशं तीर्थवारिणा पूरयित्वा स्वर्णगर्भं क्षिपे-

दष्टमृदं ततः ॥ धर्म्मकामः क्षिपेत्स्वर्णं धनकामस्तु मौक्तिकम् ॥ श्रीकामः कमलं न्यस्येत्कामार्थी रोचनं न्यसेत् ॥ मोक्षकामो न्यसेद्रत्नं जयकामोपराजिताम् ॥ उच्चाटनार्थं व्याघ्रीं च वश्यार्थं शिखिमूलिकाम् ॥ मारणार्थं मरीचं च केतकीं मोहनाय च । आकर्षणार्थं धत्तूरं प्रक्षिपेत्कलशोदरे ॥ जपेन्मन्त्रं महेशानि शृणुष्व गदतो मम । आदिमारभ्य प्रजपेत्सृष्टिक्रम इहोच्यते ॥ जपेच्छूक्रादिमारभ्य शुम्भदैत्यवधावधिः । आद्याच्छूक्रादिपर्य्यन्तं स्थितिक्रम उदाहृतः ॥ शेषमारभ्य आद्यन्तं संहारक्रम ईरितः । स्थितिपाठः सर्वकार्य्ये मुक्तिकामे च संहृतिः ॥ श्रीकामे पुष्टिकामे च सृष्टिक्रम उदाहृतः । सावर्णिः सूर्य्यतनय इत्यारभ्य सावर्णिर्भविता मनुरित्यन्तं पाठः सृष्टिक्रमः ॥ पुराशुम्भेत्यादिनवाध्यायान्पठित्वा शक्राध्यायान्तं पठेदिति स्थितिक्रमः । एवं देव्या वरं लब्ध्वा इत्यादि संहारक्रमेण सावर्णिः सूर्य्यतनय इति श्लोकान्तं पठनीयमिति संहारक्रमः । अयं पाठः सङ्कटे प्रशस्त इति दाक्षिणात्याः ॥ अथ विशेषमाह ॥ धर्म्मार्थकाममोक्षाणां कामः पूर्वमुखो हुनेत् । मोहने मारणे चैव दक्षिणाशामुखो हुनेत् ॥ उच्चाटनेतूत्तरास्यो दिशामेवं व्यवस्थितिः । धर्म्मार्थकाममोक्षाणां संसिद्धौ पायसं

हुनेत् ॥ मारणे मोक्षणे चैव तथोच्चाटनकर्म्मणि । हुनेन्माषं त्रिमध्वाक्तं मोहने मधुपायसम् ॥ स्तम्भने तु मातुलफलं वश्ये तु श्वेतसर्षपम् । अथ देवीप्रयोगसारे । सङ्कटे समनुप्राप्ते दुश्चिकित्से भये सदा । जातिध्वंसे कुलच्छेदे आयुषोनाश आगते ॥ वैरिवृद्धौ व्याधिवृद्धौ धननाशे तथा क्षये । तथैव त्रिविधोत्पाते तथा चैवातिपातके ॥ कुर्य्याद्यत्नाच्छतावृत्तिं ततः सम्पद्यते शुभम् । विपदस्तस्य नश्यन्ति अन्ते याति पराङ्गतिम् ॥ श्रियो वृद्धिः शतावृत्या राज्यवृद्धिस्तथा परा । मनसा चिन्तितं देवि सिद्ध्येदष्टोत्तरं शतम् ॥ शताश्वमेधयज्ञानां फलं प्राप्नोति सुव्रते । सहस्रावर्त्तनाल्लक्ष्मीरावृणोति स्वयं सदा ॥ कामान्मनोगतान्प्राप्य नरो मोक्षमवाप्नुयात् । यथाश्वमेधः क्रतुषु देवानां च यथा हरिः ॥ स्तवानामपि सर्वेषां तथा सप्तशतीस्तवः । भुक्तिमुक्ती न दूरस्थे शुद्धपाठवतां नृणाम् ॥ नातः परतरं किञ्चित्स्तोत्रमस्ति वरानने ॥

## अथ नवरात्रविधानम् ॥

अथातः सम्प्रवक्ष्यामि नवरात्रविधानकम् । जपेदेकोत्तरां वृद्धिं दिनानि नवसङ्ख्यया ॥ नवाक्षरीविधानेन सम्पूज्यार्थं विचक्षणः । सहस्रं प्रजपेन्मन्त्रं प्रत्यहं च यथाविधि ॥ हुत्वा दशांशतो होमं तत्र सिद्धिं समा-

प्नुयात् । अपरश्च ॥ बिल्वमूले समासीनो मासमेकं जपेत्सुधीः । मधुरत्रयसंयुक्तैर्बिल्वपत्रैश्च साधकः ॥ मासं होमविधानेन कुर्य्याद्वा तद्दशांशतः । कमलैः क्षीरसम्मिश्रैर्लक्ष्मीप्राप्तिर्नसंशयः ॥ अत्र तु नमोदेव्यै इत्यादिमन्त्रैरेवदशांशेन होमः कार्य्य इति सम्प्रदायः । ब्राह्मणकरणे दक्षिणानियमस्तत्रैव कथितः । पञ्चावृत्ते स्वर्णमेकं त्रिरावृत्ते तदर्द्धकम् ॥ एकावृत्ते पादमेकं दद्याद्वा शक्तितो बुध इति ॥ गायत्रीयथा । यजुर्वेदे ॥ कात्यायन्यै विद्महे कन्याकुमारि धीमहि तन्नो दुर्गा प्रचोदयादिति । अथ प्रयोगान्तरं कात्यायनीतन्त्रे ॥ पूर्वाह्णे षोडशाङ्गुलमितं चतुरङ्गुलोन्नतं स्थण्डिलं कृत्वा तत्र शुद्धगोघृतेन एकस्मिन्पात्रे रुद्रवर्त्तिषु त्रयोदश दीपान्प्रज्वाल्य दीपेषु प्रथमदीपे प्रथमाध्यायदेवता मावाह्यासनपाद्यादिगन्धदानान्तं सम्पूज्य पुष्पसमर्प्पणसमये वक्ष्यमाणनवभिः श्लोकैः पुष्पाणि समर्प्य धूपदीपौ दत्वा पायसं नैवेद्यं दत्वा ताम्बूलं दक्षिणां च दत्वा नीराजनम् । एकं ब्राह्मणं कुमारीं सुवासिनीं च भोजयेत् । सङ्कल्पयेद्वा एवं तदध्यायदेवतावाहनादिब्राह्मणभोजनान्तं प्रत्यध्यायं कुर्य्यात् । अन्ते प्रभूतनैवेद्यादिभिर्म्महा पूजा कार्य्या । अनुग्रहे पूर्वाह्णे समाप्तिः । निग्रहेऽपराह्णेसमाप्तिः । श्लोकास्तु विश्वेश्वरीं

T

जगद्धात्रीम् १ स्तुतासुरैः पूर्वमभीष्टसंश्रया २ या साम्प्रतंचोद्धत ३ या च स्मृता तत्क्षणमेव हन्ति नः ४ सर्वाबाधाप्रशमनं ५ अत्र वैरिविनाशनमित्यत्र रोगनाशनमित्याद्यूह्यम्। एवं दैत्यतापितैरित्यत्रापि। सर्वमङ्गलमाङ्गल्ये ६ सृष्टिस्थितिविनाशानां ७ शरणागतदीनार्त्त ८ सर्वस्वरूपे सर्वेशे ९ एतेऽनुग्रहे नव श्लोकाः ९ वश्ये तु विशेषः। ऊँ ह्रीं रक्तचामुण्डे तुरु तुरु अमुकं मे वशमानय स्वाहा। अनेन प्रत्यध्यायमाद्यन्तयोः पूजा सर्वान्ते अयुतमन्त्रजपः। अयुतहोमश्च। होमयेत्कटुतैलेन रक्तचन्दनराजिकाः। सहस्राहुतिमात्रेण राजानं वशमानयेत्॥ मधुना शोकपुष्पं च रात्रौ हुत्वा तु पूर्ववत्। चक्रवर्ती भवेद्वश्यं चण्डीमन्त्रप्रभावतः। अन्ते शतं ब्राह्मणाः कुमार्य्यश्च भोजनीयाः। धनार्थं बिल्वपत्रैः पूजा वश्यार्थं करवीरजैः। जपाकुसुमैर्वा पुत्रार्थं तुलसीदलैः। पुष्ट्यर्थं पङ्कजैः। महाकार्य्यार्थे प्रयोग तु षोडशमाषैः स्वर्णमूर्त्तिं कृत्वा कलशस्थापनं च कृत्वा तदग्रे घटार्गलयन्त्रे षट्कोणयन्त्रे वा दीपं स्थापयेत्। महति कार्य्ये ऊनपञ्चाश ४९ दिनानि मध्ये चतुर्विंशति दिनानि २४ तदर्द्धमल्पे १२। एवमेव मूर्त्तेः स्वर्णपरिमाणमपि बोध्यम्। महति कार्य्ये ब्राह्मणाः ३ प्रयोगकर्त्तारः। अल्पे एक एव॥

T

निग्रहे तु ॥ सर्वाबाधाप्रशमनमित्यस्याग्रे एवमुक्त्वा समुत्पत्स्येति पठेत् । अस्मिन्प्रयोगे तर्प्पणमपि कुर्यात् । त्रयोदश पात्राणि दुग्धेनापूर्य्याद्यन्तयोः पुष्पाञ्जलिं दत्वा प्रतिश्लोकं प्रथमाध्यायदेवतां तर्प्पयामि इति प्रयोगेण तर्पयेत् ॥ तथा त्रयोदशस्वग्निषु क्रमात्तदध्यायदेवता आवाह्य सम्पूज्य प्रतिमन्त्रमों प्रथमाध्यायदेवतायै नमः स्वाहेति मन्त्रेण पायसेन जुहुयात् ॥ प्रत्यहं यावत्प्रयोगसमाप्तिः श्लोकं प्रत्यध्यायं वा पठेत् ॥ दीपेषु अक्षतपुञ्जेषु जलपात्रेषु अग्निषु कुमारीषु वा कार्य्यं इत्युपदेशः ॥ अथैतत्स्तोत्रपाठे डामरकल्पोक्तनवार्णसम्पुटीकरणप्रयोगविधिः ॥ तत्रादौ तदुद्धारः ॥ ऐं बीजमादीन्दुसमानदीप्तिं ह्रीं सूर्य्यतेजोद्युतिमद्वितीयम् । क्लीं चापि वैश्वानरतुल्यरूपं तृतीयमानन्त्यसुखाय चिन्त्यम् ॥ चा शुद्धजाम्बूनदकान्तिसूर्य्यं मुं पञ्चमं वेस्तुतरं प्रकल्प्यम् । डां षष्ठमुग्रार्त्तिहरं सुनीलं यै सप्तमं कृष्णतरं रिपुघ्नम् ॥ वि पाण्डुरं त्वष्टममादिसिद्धं च्चे धुम्रवर्णं नवमं विशालमिति ॥ ऐं ह्रीं क्लीं चामुण्डायै विच्चे । इति नवाक्षरो मन्त्रः ॥ अस्य प्रयोगः ॥ नाभिमात्रे जले सहस्रजपात्कवितासिद्धिः ॥ अयुतजपे राजबन्धनसङ्कटादिभ्यो मोक्षः ॥ अस्मिन्नवाक्षरे मन्त्रे महालक्ष्मीर्व्यवस्थिता । तस्मात्सुसिद्धः सर्वे-

षां सर्वदिक्षुप्रदीपकः ॥ इत्येतेनास्य सिद्धादिचक्रशोधनं नास्तीति सूचितम्। नवाक्षरस्य ऋषयो ब्रह्मविष्णुमहेश्वराः। छन्दांस्युक्तानि मुनिभिर्गायत्र्युष्णिगनुष्टुभः ॥ देव्यः प्रोक्ता महापूर्वा काली लक्ष्मी सरस्वती । नन्दा शाकम्भरी भीमाः शक्तयोस्य मनोःस्मृताः ॥ स्यू रक्तदन्तिका दुर्गाभ्रामर्य्यो बीजसञ्ज्ञयाः। अग्निवायुभगास्तत्वं फलं वेदत्रयोद्भवम् ॥ सर्वाभीष्टप्रसिध्यर्थे विनियोग उदाहृतः।

॥ अथ प्रयोगः ॥

अस्य श्रीनवार्णमन्त्रस्य ब्रह्मविष्णुमहेश्वरा ऋषयः गायत्र्युष्णिगनुष्टुभ श्छन्दांसि ॥ महाकाली महालक्ष्मी महासरस्वत्यो देवताः नन्दाशाकम्भरीभीमाः शक्तयः॥ रक्तदन्तिकादुर्गाभ्रामर्यो बीजानि अग्निवायुभगास्तत्वानि सर्वाभीष्टासिद्ध्यर्थे जपे विनियोगः ॥ तत ऋष्यादिन्यासं कुर्य्यात् ॥ यथा ॥ ब्रह्मविष्णुमहेश्वरेभ्यो नमः शिरसि ॥ गायत्र्युष्णिगनुष्टुप्छन्दोभ्यो नमो मुखे। महाकालीमहालक्ष्मीमहासरस्वतीदेवताभ्यो नमो हृदि ॥ नन्दाशाकम्भरीभीमाशक्तिभ्यो नमः दक्षिणस्तने। श्रीरक्तदन्तिकादुर्गाभ्रामरीबीजेभ्यो नमः वामस्तने। अग्निवायुसूर्य्यतत्वेभ्यो नमः हृदये। उक्तं च । ऋषिश्छन्दो देवतानि

T

शिरोमुखहृदि न्यसेत् । स्तनयोः शक्तिबीजानि तत्वानि हृदये पुनः । अथ विशेषमाह ॥ मन्त्राणां पल्लवो वासो मन्त्राणां पल्लवः शिरः । शिरः पल्लवसंयुक्तो मन्त्रः पुष्ट्यादिसाधकः ॥ हुंकारपल्लवोपेतो मारणे ब्राह्मणं विना । यन्त्रभञ्जनकार्य्येषु सुघोरभयनाशने ॥ वषडन्तः प्रकल्प्यस्तु ग्रहबाधाविनाशकः । उच्चाटने तु सम्प्रोक्तो मन्त्रः फट् पल्लवान्वितः ॥ एते पल्लवास्तु तत्तत्कर्म्माणि चण्डीपाठेपि श्लोकादौ योज्याः । तथा न्यासहीनो भवेन्मूको मृतः स्याच्छिरसा विना । अपास्तवासो नग्नः स्यात् सुप्तः स्यादासनं विना ॥ गुरुं विना वृथा मन्त्रः सत्यजापस्तु शून्यकः । निर्व्वीर्यो दुष्टदत्तः स्यादन्यबीजस्तु कीलितः ॥ दुष्टदत्तः दुष्टाय दत्त इत्यर्थः । देवछन्दर्षिहीनो यः स तु सुप्तो भुजङ्गमः । मूकादयो मन्त्रा वर्ज्याः ॥ वैदिके न पल्लवादिविचारः । ह्रीं चण्डिकायै इत्यनेनास्य मन्त्रस्य स्तोत्रस्य च षडङ्गकरन्यासौ । हृदयाय नमः । शिरसे स्वाहा । शिखायै वषट् । कवचाय हुम् । नेत्रत्रयाय वौषट् । अस्त्राय फडिति क्रमः । अस्त्रं सर्वदिक्षु बोध्यम् । नवबीजमन्त्रान्ते चण्डिका तृप्यतामिति मन्त्रेण तर्प्पणम् । एवं होमादिषु ज्ञेयम् ।

॥ अत्र यन्त्रमाह ॥

लिखेदष्टदलं पद्मं कुङ्कुमागुरुचन्दनैः । ततश्चतुर्विंशदलं भूपुरेण समन्वितम् । पद्ममध्ये लिखेच्चक्रं षट्कोणं चण्डिकामयम् । षट्कोणचक्रमध्यस्थमाद्यं बीजत्रयं न्यसेत् ॥ तत्र मध्यबीजे महालक्ष्मीः । तद्दक्षिणे महाकाली वामे सरस्वती । पूर्वादिषु षट्सु कोणेषु बीजान्यन्यानि विन्यसेत् । इदं पूजायन्त्रम् । पद्मासनाद्यन्यतममासनम् । तथा सप्तशतीश्लोकैर्न्यासः । खड्गिनीशूलिनीत्यादिपाठित्वा श्लोकपञ्चकम् । आद्यं कृष्णतरं बीजं ध्यात्वा सर्वाङ्गकं न्यसेत् । आद्यमैमिति । शूलेन पाहिनो देवीत्यादिश्लोकचतुष्टयम् । पठित्वा सूर्य्यसदृशं द्वितीयं सर्वतो न्यसेत् । द्वितीयम् । ह्रीमिति । सर्वस्वरूपइत्यादिश्लोकानां पञ्चकं पुनः पठित्वा स्फटिकाभासं तृतीयं सर्वतो न्यसेत् । तृतीयं क्लीमिति । उक्तैरेव श्लोकैरावृत्तिद्वयेन षडङ्गन्यासोपि क्वचिदुक्तः । ततः षडङ्गं कुर्वीत विभक्तैर्मूलवर्णकैः । एकैनकेन वैकेन चतुर्भिर्युगलेन च । समस्तेन च मन्त्रेण कुर्य्यादङ्गानि षट् सुधीः । एवं न्यासविधिं कृत्वा सृष्टिमुद्रां विलोकयेत् ॥ ततः परिषिञ्चति पूजार्थं द्रव्याणि नवबीजतः । तलपृष्ठोद्भवां मुद्रां दत्वास्त्रेणावगुण्ठयेत् ॥ अर्घपात्रं प्रतिष्ठाप्य

T

पूरयेच्छुभवारिणा । गन्धपुष्पाक्षतांस्तत्र निन्यस्य नृपनन्दन ॥ ध्यात्वा सर्वाणि तीर्थानि हस्तौ दत्वाभिमन्त्रयेत् । रक्षार्थं तस्य कर्त्तव्या चक्रमुद्रास्त्रसंयुता ॥ अर्घोदकेन संस्कारं पूजाद्रव्यस्य पूर्ववत् ॥

॥ अथ महाकाल्यादिदेवतात्रयध्यानम् ॥

खड्गं चक्रगदेषुचापपरिघान् शूलं भुशुण्डीं शिरः शङ्खं सन्दधतीं करैस्त्रिनयनां सर्वाङ्गभूषावृताम् । नीलाश्मद्युतिमास्यपाददशकां सेवे महाकालिकां यामस्तौच्छयिते हरौ कमलजो हन्तुं मधुं कैटभम् ॥ १ ॥ अक्षस्रक् परशू गदेषुकुलिशं पद्मं धनुः कुण्डिकां दण्डं शक्तिमसिं च चर्म्म जलजं घण्टा सुराभाजनम् । शूलं पाशसुदर्शने च दधतीं हस्तैः प्रवालप्रभां सेवे सैरिभमर्द्दिनीमिह महालक्ष्मीं सरोजस्थिताम् ॥ २ ॥ घण्टाशूलहलानि शङ्खमुशले चक्रं धनुःसायकं हस्ताजैर्दधतीं घनान्तरलसच्छीतांशुतुल्यप्रभाम् गौरीदेहसमुद्भवां त्रिजगतामाधारभूतां महापूर्वामत्र सरस्वतीमनुभजे शुम्भादिदैत्यार्द्दिनीम् ॥ तत उक्तमन्त्रैः पञ्चोपचारैः पूजां कृत्वा जपेल्लक्षचतुष्टयम् । तद्दशांशतः पायसान्नेन जुहुयात् । पूजिते हेमरेतसि एतदेवास्य पुरश्चरणम् । मार्कण्डेयपुराणोक्तं नित्यं चण्डीस्तवं पठन् । पुटितं मूलमन्त्रस्य

जपेनाप्नोति वाञ्छितमिति ॥

॥ अथ शतचण्डीविधिः ॥

शङ्करस्य भवान्या वा प्रासादे निकरे शुभम् । मण्डपं द्वारवेद्याढ्यं कुर्य्यात्सुध्वजतोरणम् ॥ तत्र कुण्डं प्रकुर्वीत प्रतीच्यां मध्यतोपि वा। स्नात्वा नित्यक्रियां कृत्वा वृणुयाद्दश वाडवान् ॥ जितेन्द्रियान्सदाचारान्कुलीनान्सत्यवादिनः । वाडवान् ब्राह्मणान् । व्युत्पन्नान् । चण्डिकापाठरतान् । लज्जादयावतः । मधुपर्कविधानेन स्वर्णवस्त्रादिदानतः । जपार्थमासनं मालां दद्यात्तेभ्योपि भोजनम् ॥ ते हविष्यान्नमश्नन्तो मन्त्रार्थगतमानसाः । भूमौ शयानाः प्रत्येकं जपेयुश्चण्डिकास्तवम् ॥ मार्कण्डेयपुराणोक्तं दश कृत्वः सुचेतसः । नवार्णं चण्डिकामन्त्रं जपेयुश्चायुतं पृथक् ॥ पृथक् सम्पुटीकरणजपादितिशेषः । प्रत्येकं ब्राह्मणैरयुतजपः कार्य्यः । अथाष्टमीनवमीचतुर्दशीपौर्णमासीषु यथा शतावृत्तिसमाप्तिर्भवति तथा प्रारम्भः कर्त्तव्य इति साम्प्रदायिकाः । यजमानः पुजयेच्च कन्यानां नवकं शुभम् । द्विवर्षाद्या दशान्तास्ताः कुमारीः परिपूजयेत् ॥ एकाब्दायाः प्रीत्यभावाद्रुद्राब्दा तु विवर्ज्जिता । तासां क्रमेण नामानि ॥ कुमारी १।२ त्रिमूर्त्तिः २।३ कल्याणी ३।४ रोहिणी ३।४ रोहिणी ४।५ कालिका

५।६ चण्डिका ६।७ शाम्भवी ७।८ दुर्गा ८।९ सुभद्रा ९।१० एतैरेव नाममन्त्रैः तासां पूजा। तासामावाहने मन्त्रः प्रोच्यते शङ्करोदितः। यथा। मन्त्राक्षरमयीं लक्ष्मीं मातृणां रूपधारिणीम्। नवदुर्गात्मिकां साक्षात्कन्यामावाहयाम्यहम्। इत्यावाह्य पूजयेत्। मन्त्रो यथा। जगत्पूज्ये जगद्वन्द्ये सर्वशक्तिस्वरूपिणि। पूजां गृहाण कौमारी जगन्मातर्नमोस्तु ते। १। त्रिपुरां त्रिपुराधारां त्रिवर्गज्ञानरूपिणीम्। त्रैलोक्यवन्दितां देवीं त्रिमूर्त्तिं पूजयाम्यहम्। २। कलात्मिकां कलातीतां कारुण्यहृदयां शिवाम्। कल्याणजननीं देवीं कल्याणीं पूजयाम्यहम्॥ ३॥ अणिमादि गुणाधारामाकाराद्यक्षरात्मिकाम्। अनन्तशक्तिकां लक्ष्मीं रोहिणीं पूजयाम्यहम्। ४॥ कामचारीं शुभां कान्तां कालचक्रस्वरूपिणीम्। कामदां करुणोदारां कालिकां पूजयाम्यहम्॥ ५॥ चण्डवीरां चण्डमायां चण्डमुण्डप्रभञ्जिनीम्। पूजयामि सदा देवीं चण्डिकां चण्डविक्रमाम्॥ ६॥ सदानन्दकरीं शान्तां सर्वदेवनमस्कृताम्। सर्वभूतात्मिकां लक्ष्मीं शाम्भवीं पूजयाम्यहम्॥ ७॥ दुर्गमे दुस्तरे घोरे भवदुःखविनाशिनीम्। पूजयामि सदा भक्त्या दुर्गां दुर्गार्तिनाशिनीम्॥ ८॥ सुन्दरीं स्वर्णवर्णाभां सुखसौ-

भाग्यदायिनीम्। सुभद्रजननींदेवीं सुभद्रां पूजयाम्यहम् ६ एतैर्म्मन्त्रैः पुराणोक्तैस्तां तां कन्यां समर्च्चयेत्। तत्र हीनाधिकाङ्गी कुष्ठव्रणयुता अन्धाकाणा कुरूपा केकरा रोमयुग्देहा दासीजा रोगिण्य इत्येवमाद्या वर्ज्याः। विप्रां सर्वेष्टसंसिद्धौ यशसे क्षत्रियोद्भवाम्। वैश्यजां धनलाभाय पुत्राप्त्यै शूद्रजां यजेदिति ॥ गन्धपुष्पधूपदीपभक्ष्यभोज्यैर्यथाशक्तिवस्त्राभरणैश्च पूजयेत् ॥

## ॥ अथ पूजनप्रकारः ॥

वेद्यां विरचिते रम्ये सर्वतो भद्रमण्डले। घटं संस्थाप्य विधिवत्तत्रावाह्यार्च्चयेच्छिवाम्॥ तदग्रे कन्यकाश्चापि पूजयेद्ब्राह्मणानपि। उपचारैस्तु विविधैर्न्नवार्णवर्णानपि ॥ तत्र। ओं कारः प्रथमं पीठं पूर्णपीठमतः परम्। तृतीयं कामपीठं च पूजयेत्सम्प्रदायतः॥ पूर्वादिदिक्षु पीठस्य गणेशादिचतुष्टयम्। गणेशक्षेत्रपालौ च पादुके बटुकास्त्रयः॥ आग्नेयादिचदुर्द्दिक्षु पूज्यं देवीचतुष्टयम्। जया च विजया चैव जयन्ती चापराजिता॥ पूर्वोक्तयन्त्रे पूर्वकोणे सरस्वतीसहितो ब्रह्मा। श्रीसहितो विष्णुर्नैर्ऋत्ये उमया सहितः शिवो वायव्ये। षट्कोणचक्रमध्यस्थमध्यबीजे महालक्ष्मीः। तद्दक्षिणे महाकाली। तद्वामे महासरस्वती। उत्तरे सिंहः। दक्षिणे महिषः।

षट्कोणचक्रेषु नन्दजा १ रक्त दन्तिका २ शाकम्भरी ३ दुर्गा ४ भीमा ५ भ्रामर्य्यः ६ । सविन्दुनामाद्यर्णाढ्यास्ताराद्याश्चासां नाममन्त्राः पूजादौ ज्ञेयाः। ओं नन्दजायै नम इति प्रयोगः। अष्टपत्रेषु ब्रह्माणी १ माहेश्वरी २कौमारी ३ वैष्णवी ४ वाराही ५ नारसिंही ६ इन्द्राणी ७ चामुण्डा ८ उक्तरीत्या नाममन्त्रैः पूज्याः। ओं ब्रं ब्रह्माण्यै नम इत्यादि प्रयोगः। ततो विष्णुमायादिचतुर्विंशतिदेवताश्चतुर्विंशतिपत्रेषु प्रागादिक्रमेण नाममन्त्रैः पूज्याः। ताश्च। विष्णुमाया १ चेतना २ बुद्धिः ३ निद्रा ४ क्षुधा ५ छाया ६ शक्तिः ७ तृष्णा ८ क्षान्तिः ९ जातिः १० लज्जा ११ शान्तिः १२ श्रद्धा १३ कीर्त्तिः १४ लक्ष्मीः १५ धृतिः १६ वृत्तिः १७ श्रुतिः १८ स्मृतिः १९ दया २० तुष्टिः २१ पुष्टिः २२ माता २३ भ्रान्तिः २४ नालमूले तु आधारः १ कूर्म्मः २ शेषः ३ पृथ्वी४भूपुरकोणेषु गणेशः। १ क्षेत्रपालः २ बटुकः३ योगिनी ४। एते पूज्याः। पूर्वादि दिक्षु क्रमेण इन्द्राद्याः। इन्द्रः १ अग्निः २ यमः ३ निर्ऋतिः ४ वरुणः ५ वायुः६सौम्यः७ईशानः८अनन्तः९ ब्रह्मा १०। ततो वज्राद्याः। वज्रं १ शक्तिः २ दण्डः ३ खड्गः ४ पाशः ५ अङ्कुशः ६गदा७त्रिशूलम्८चक्रम्९ पद्मम् १०। पूज्याः। एवं चतुर्दिनं कृत्वा पञ्चमे होममाच-

रेत्। तत्र प्रथमदिने एका वृत्तिः। द्वितीयदिने द्वे तृतीये तिस्रः। चतुर्थे चतस्रः। प्रतिब्राह्मणम्॥ होमद्रव्याणि॥ पायसान्नैस्त्रिमध्वक्तैर्द्राक्षारंभाफलादिभिः। मातुलिङ्गैरिक्षुदण्डैर्नारिकेरैः पुरैस्तिलैः॥ जातीफलैराम्रफलैरन्यैर्म्मधुरवस्तुभिः। सप्तशत्या दशावृत्या प्रतिमन्त्रं हुतं चरेत्॥ अयुतञ्च नवार्णेन स्थापितेऽग्नौ विधानतः। कृत्वा वरणदेवानां होमं तन्नाममन्त्रतः॥ कृत्वा पूर्णाहुतिं सम्यक् देवमग्निं विसृज्य च। अभिषिञ्चेच्च यष्टारं विप्रौघः कलशोदकैः॥ निष्कं सुवर्णमथवा प्रत्येकं दक्षिणां दिशेत्। भोजयेच्च शतं विप्रान् भक्ष्यभोज्यैः पृथग्विधैः॥ तेभ्योपि दक्षिणान्दत्वा गृह्णीयादाशिषस्ततः। एवं कृते जगद्वश्यं सर्वं नश्यन्त्युपद्रवा इति॥ एतद्दशगुणं कुर्य्याच्चण्डीसाहस्रके विधिम्। विद्यावतः सदाचारान् ब्राह्मणान्वृणुयाच्छतम्॥ प्रत्येकं चण्डिकापाठान्विदध्युस्ते दिशामि तान्। चतुर्द्दिनैरुक्तरीत्येतिशेषः। अयुतं प्रजपेयुस्ते प्रत्येकं नववर्णकम्॥ पूर्वोक्ताः कन्यकाः पूज्याः पूर्वमन्त्रैः शतं शुभाः। वेदाहमेवं सम्पाद्य होमं कुर्य्युः प्रयत्नतः॥ सप्तशत्याऽशतावृत्या प्रतिमन्त्रविधानतः। लक्षसङ्ख्यानवार्णेन पूर्वोक्तैर्द्रव्यसञ्चयैः॥ होतृभ्यो दक्षिणां दत्वा पूर्वोक्तान्भोजयेद् द्विजान्। सहस्रसम्मितान्

साधून्देव्याराधनतत्परान् ॥ एवं सहस्रसङ्ख्याके कृते चण्डीविधौ नृणाम् । सिद्ध्यत्यभीप्सितं सर्वं दुःखौघश्च विनश्यति ॥ मारीदुर्भिक्षरोगाद्या नश्यन्ति व्यसनोच्चयः। एतद्दशगुणो विधिरयुतचण्ड्यां तद्दशगुणो विधिर्लक्षच-ण्ड्यां शतब्राह्मणैरेव वा चत्वारिंशद्दिनैरयुतचण्डी का-र्य्या । तत्र प्रथमे दशके एकैकावृत्तिः द्वितीयदशके द्वे तृतीये तिस्रः चतुर्थे चतस्रः । इत्यादि बोध्यमिति । अथ चण्डीपाठहोमे कवचमन्त्रेण होमनिषेधः । अन्धकश्च महादैत्यो दुर्गाहोमपरायणः । कवचाहुतिमात्रेण महेशेन निपातित इति ॥ तत्र कवचम् । शूलेन पाहीत्यादि श्लोकचतुष्टयम् । तदाहुतिचतुष्टयम् महालक्ष्म्यस्वाहेत्ये-वेत्यभियुक्ताः ॥

## अथ प्रयोगक्रमः ॥

तन्त्रोक्तविधिना शिवालये- वा मण्डपं विधाय तन्मध्ये वेदीं च निर्म्माय प्रतीच्यां कुण्डमध्ये वा कृत्वा । कृतनित्यक्रियः स्वस्तिवाचनं कृत्वा सङ्कल्पं कुर्य्यात् । यथा । ओंतत्सत् अद्येत्याद्यमुकगोत्रस्यामुकशर्म्मणो मम सपरिवारस्य सर्व्वबाधाप्रशमनपूर्वकशत्रुचौरराजश-स्त्रानलहेतुकभयाभावत्रिविधोत्पातशमनधनधान्यसुता-न्वितत्वनिर्भयत्वसर्वसङ्कटाविमुक्तिबलपुष्टिधनवृद्धि-

सुखसौमनस्यनैरुज्यप्राप्तिकामोऽद्यादि यथाकालं शत-चण्डीविधानमहं करिष्ये । इति सङ्कल्पं विधाय । मातृकास्थापननान्दीश्राद्धे विधाय पुरोक्तलक्षणान्दश-ब्राह्मणान् मधुपर्कवस्त्रहेमादिना वृणुयात् । ते च यज-मानदत्तासनेषु तद्दत्तमालाभिः स्वस्थचित्ता भगवतीं स्मरन्तः सप्तशतीमूलमन्त्रेण वेद्यां सर्वतोभद्रे स्वर्णरजत-ताम्राद्यन्यतमं घटं स्थापयित्वा तत्र दुर्गामावाह्य षोडशो-पचारैः सम्पूज्य तदग्रे प्रत्येकं दश कृत्वः सप्तशतीमयुतं च नवार्णं जपेयुः। हविष्यभोजनब्रह्मचर्य्यभूशयनास्पृश्या-स्पर्शादिनियमांश्चरेयुः। यजमानश्च वस्त्रालङ्कारविवि-धपक्वान्नदानादिना उक्तलक्षणलक्षिताः कन्या आवाह्य जगत्पूज्येत्यादिस्वस्वमन्त्रैः पूजयेत् । एवं चत्वारिदिना-नि जपं कुमारीपूजां समाप्य पञ्चमदिने कुण्डे स्थण्डिले वाऽऽगमोक्तविधिना वह्निं संस्थाप्य पायसान्नादिभिरुक्त-द्रव्यैर्जुहुयात् । सप्तसत्याः प्रतिश्लोकं दशवारं नवार्णेना-युतं च होमे सङ्ख्या एकैको द्विजः सकृत्सप्तशतीप्रति-श्लोकं सहस्रं मूलेन जुहुयात् । तत आवरणदेवतानां नाममन्त्रैस्तारादिस्वाहान्तैरेकैकामाहुतिं दत्वा कुम्भस्थां देवीं सम्पूज्य वलिदानं विधाय होतृभ्यः प्रत्येकं निष्कं निष्कं अशक्तौ सुवर्णमितं स्वर्णं दद्यात् । इति शतच-

ण्डीप्रकारः ॥

॥ अथ सहस्रचण्डीविधानम् ॥

यथा। तत्र शतविप्रवरणम् । एते शतं ब्राह्मणाः प्रत्येकं दश दश सप्तशतीपाठान्कुर्य्युः । अयुतमयुतंनवार्णजपं च कुर्य्युः शतकन्याश्च भोज्याः पूज्याश्च । एवं दशदिनेषु समाप्तेषु एकादशेऽह्नि सप्तशतीशतावृत्त्या प्रतिश्लोकं लक्षसङ्ख्यो नवार्णैर्होमः । शेषं पूर्ववत् । इति सहस्रचण्डीविधानम् । एवं सहस्रचण्डीदशगुणोऽयुतचण्डीविधिः । तद्दशगुणो लक्षचण्डीविधिरिति । जपे होमे दक्षिणायां कुमारीभोजने ब्राह्मणभोजने च दशगुणत्वमिति ।

अथ प्रयोगान्तराणि कात्यायनीतन्त्रोक्तानि । प्रतिमन्त्रमाद्यन्तयोः प्रणवं जपेन्मन्त्रसिद्धिः । अग्रे सर्वत्र श्लोकपदं मन्त्रोपलक्षणम् । सप्रणवमनुलोमव्याहृतित्रयमादावन्ते तु विलोमं तदित्येवं प्रतिश्लोकं कृत्वा शतावृत्तिपाठेऽतिशीघ्रं सिद्धिः ॥ २ ॥ प्रतिश्लोकमादौ जातवेदसइति ऋचं पठेत्सर्वकामसिद्धिः । २ । ऋचमपि लिख्यते । जातवेदसे सुनवामसोममरातीयतोनिदहातिवेदः । सनः पर्षदतिदुर्गाणिविश्वानावेवसिन्धुंदुरितात्यग्निः । इति ऋक् । अपमृत्युवारणाय आदावन्ते शतं

त्र्यम्बकमन्त्रं जपेत् । ४ । प्रतिश्लोकं तन्मन्त्रजप इत्यन्य-त् । ५ । प्रतिश्लोकं शरणागतदीनार्त्तश्लोकं पठेत्सर्वकार्यसिद्धिः ।६। प्रतिश्लोकं करोतुसानः शुभहेतुरीश्वरीत्यर्द्धं पठेत्सर्वकामाप्तिः ७ स्वाभीष्टवरप्राप्त्यै एवं देव्या वरं लब्ध्वेति श्लोकं प्रतिश्लोकं पठेत् । ८ । सर्वापन्निवारणार्थं प्रतिश्लोकं दुर्गेस्मृतेति पठेत् ॥ ९ ॥ अस्य केवलस्यापि श्लोकस्य कार्य्यानुसारेण लक्षमयुतं सहस्रं शतं वा जपः १० सर्वाबाधेत्यस्य लक्षजपे श्लोकोक्तं फलम् ११ । इत्थं यदा यदेति श्लोकस्य लक्षजपे महामारीशान्तिः १२ ततो वव्रे नृपो राज्यमिति मन्त्रस्य लक्षजपे पुनः स्वराज्यलाभः १३ हिनस्ति दैत्यतेजांसीत्यनेन सदीपबलिदाने घण्टा-बन्धने च बालग्रहशान्तिः १४ । आद्यावृत्तिमनुलोमेन पठित्वा ततो विपरीतक्रमेण द्वितीयां कृत्वा पुनरनुलोमेने त्येवमावृत्तित्रयेण उक्तेषु प्रकारेषु शीघ्रं कार्य्यसिद्धिः।१५। सर्वापन्निवारणाय दुर्गे स्मृतेत्यर्द्धम् । ततः ॥ यदन्तिके यच्च दूरके भयं विन्दति मामिह । पवसानरीतज्जहि इति ऋचं तदन्ते दारिद्र्यदुःखेत्यर्द्धमेवं कार्य्यानुसारेण लक्ष-मयुतं सहस्रं वा शतं जपः १६ । कांसोस्मितां हिरण्यप्राकारामार्द्राज्वलन्तीं तृप्तां तर्प्पयन्तीं पद्मे स्थितां पद्मवर्णां तामिहोपह्वये श्रियम् । इति ऋचं ॥

प्रतिश्लोकं पठेल्लक्ष्मीप्राप्तिः १७। प्रतिश्लोकमनृणा अस्मिन्निति मन्त्रं पठेदृणपरिहारः १८मारणार्थमेवमुक्त्वा समुत्पत्येति प्रतिश्लोकं पठेत् १९। मारणोक्तवृत्तिभिः फलसिद्धिः। २० ज्ञानिनामपि चेतांसीति श्लोकजपमात्रेण सद्योमोहनमित्यनुभवसिद्धम् २१। प्रतिमन्त्रं तत् श्लोकपाठेत्ववश्यं मोहनम्। २२। रोगानशेषानिति श्लोकस्य प्रतिश्लोके पाठे सकलरोगनाशः २३ तन्मात्रजपेपि सः २४ इत्युक्ता सा तदा देवी गम्भीरेति श्लोकस्य प्रतिश्लोकपाठे पृथग्जपे वा विद्याप्राप्तिः २५। वाग्वैकृतनाशश्च २६ भगवत्या कृतं सर्वमित्यादि द्वादशोत्तरशताक्षरो मन्त्रः सर्वकामदः सर्वापन्निवारकश्च २७। देवि प्रपन्नार्तिहरे इति श्लोकस्य यथाकार्यं लक्षायुतसहस्रशतान्यतमे जपे प्रतिश्लोकपाठे वा सर्वापन्निवृत्तिः सर्वकामावाप्तिश्च॥ २८॥ एषु प्रयोगेषु प्रतिश्लोकं दीपकेवलनमस्कारेण वा सिद्धिः॥ २९॥ प्रतिश्लोकं कामबीजसम्पुटितस्यैकचत्वारिंशद्दिनं त्रिरावृत्तौ सर्वकामसिद्धिः॥ ३०॥ एकविंशतिदिनमुक्तरीत्या प्रत्यहं द्वादशावृत्तौ वशीकरणम्॥ ३१॥ मायाबीजसम्पुटितस्य कूटपल्लवसहितस्य सप्तदिनपर्यन्तं त्रयोदशावृत्तावुच्चाटनसिद्धिः॥३२॥ एकोनपञ्चाशद्दिनपर्य्यन्तं प्रतिश्लोकं

श्रीबीजसम्पुटितस्य पञ्चदशावृत्या लक्ष्मीप्राप्तिः॥२३॥ अथ कामनाभेदेन ध्यानभेदः। वश्ये रक्तं पौष्टिके कर्बुरम्। उच्चाटने धूम्रं मारणे कृष्णं सन्तानार्थं नीलोत्पलदलश्यामम्। रत्नाकारध्यानं सर्वकामदं युद्धे कालाग्निसमं जलभये महाशोषयुक्तं विषादिभये पीयूषवृष्टियुक्तपूर्णचन्द्रसदृशं ध्यायेत्॥

इति श्रीजीवनाथकृते दीक्षाप्रकाशे सप्तशतीपाठविधिः।

॥ अथ पार्थिवपूजाप्रकारः॥

ॐ सद्योजातं प्रपद्यामि सद्योजाताय वै नमः। भवे भवेनातिभवे भवस्व मां भवोद्भवाय नमो नमः। इति मन्त्रेण मृत्तिकाग्रहणम्। ॐ वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः। कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः। इति मन्त्रेण जलक्षेपः। ततः ॐ अघोरेभ्योथ घोरेभ्योऽघोरघोरतरेभ्यः सर्वेभ्यः सर्वशर्वेभ्यो नमस्तेस्तु रुद्ररूपेभ्यः। इति लिङ्गकरणम्। ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि तन्नो रुद्रः प्रचोदयादिति बाणं कुर्यात्। ॐ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्माशिवो मेऽस्तु सदा शिवोम्। इति वेदि-

कायां बाणं संयोज्य ध्यायेत्। तद्यथा। ऊँ ध्याये नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसं रत्नाकल्पोज्वलाङ्गं परशुमृगवराभीतिहस्तं प्रसन्नम्। पद्मासीनं समन्तात्स्तुतमरगणैर्व्याघ्रकृत्तिं वसानं विश्वाद्यं विश्वबीजं निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रम्॥ कर्पूरगौरं करुणावतारं संसारसारं भुजगेन्द्रहारम्। सदारमन्तं हृदयारविन्दे भवं भवानीसहितं नमामि॥ कैलासपीठासनमध्यसंस्थं भक्तैश्च नन्द्यादिभिरर्च्यमानम्। भक्तार्तिदावानलमप्रमेयं ध्यायेदुमालिङ्गितमिन्दुभूषमिति ध्यात्वा बिल्वपत्रं सगन्धपुष्पाक्षतं गृहीत्वा ऊँ मनोज्योतिरिति मन्त्रेण प्रतिष्ठां कुर्यात्। मन्त्रो यथा। ऊँमनोज्योतिर्जुषतामाज्यस्य बृहस्पतिर्य्यज्ञमिमं तनोत्वरिष्टं यज्ञ॒ᳲसमिमं दधातु विश्वे देवा स इह मादयन्तामोम् प्रतिष्ठ। तत इमं पठेत्। स्वामिन् सर्वजगन्नाथ यावत्पूजावसानकम्। तावत्त्वं प्रीतिभावेन लिङ्गेऽस्मिन् सन्निधिं कुरु। ततः पाद्यम्। ऊँभवाय भवनाशाय महादेवाय धीमहि। उग्राय चोग्रनाशाय सर्वाय शशिमौलिने नमः। शिवाय इदं पाद्यम्। ऊँसाम्बशिवाय नमः। इदमर्घ्यं स्वाहा। इदमाचमनीयं स्वधा। इमं मधुपर्कं स्वधा। इदमनुलेपनम्। एतानि पुष्पाणि। ओं साम्बशिवाय वौषट्॥ बिल्वपत्राणि दत्वा। ओं

शर्वाय क्षितिमूर्त्तये नमः। ऐशान्याम्। ओं भवाय जलमूर्तये नमः। प्राच्याम्। ओं रुद्रायाग्निमूर्तये नमः। आग्नेय्याम्। ओं उग्राय वायुमूर्तये नमः। दक्षिणस्याम्। ओं भीमायाकाशमूर्तये नमः। नैर्ऋत्याम्। ओं पशुपतये यजमानमूर्तये नमः। वारुण्याम्। ओं महादेवाय सोममूर्तये नमः। वायव्याम्। ओं ईशानाय सूर्य्यमूर्तये नमः। उत्तरस्याम्। ओं नमः शिवायेति पुष्पाञ्जलिं दद्यात्। एष धूपः नमः। एष दीपः नमः। एतानि नैवेद्यानि निवेदयामि। इदं ताम्बूलं नमः। ततः। नमः। ओं काररूपाय नमोक्षरवपुर्भृते। नमो नादात्मने तुभ्यं नमो विन्दुकलात्मने॥ अलिङ्गलिङ्गरूपाय रूपातीताय ते नमः। त्वं माता सर्वलोकानां त्वमेव जगतः पिता॥ त्वं भ्राता त्वं सुहृन्मित्रं त्वं प्रियः प्रियरूपधृक्। त्वं गुरुस्त्वं गतिः साक्षात् त्वं पिता त्वं पितामहः॥ नमस्ते भगवन् रुद्र भास्करामिततेजसे। नमो भवाय रुद्राय उमया सहिताय च॥ सर्वाय क्षितिपालाय सदासुरभिदे नमः। पशूनां पतये चैव पावकामिततेजसे। भीमाय व्योमरूपाय शब्दमात्राय ते नमः। महादेवाय सोमाय अमृताय नमो नमः॥ उग्राय यजमानाय नमस्ते कर्मयोगिने। ओं हराय नमः। ओं महेश्वराय नमः॥ ओं शूलपाणये नमः॥

मृतिकाग्रहणम् । निर्माणं कुर्यात् । प्राणप्रतिष्ठां । ओं शूलपाणे इह सुप्रतिष्ठितो भव । ओं मनोज्योतिरिति पठेत् ओं पिनाकधृषे नमः ॥ ओं पशुपतये नमः ॥ ओं शिवाय नमः । आवाहनं इहागच्छ।इति स्नपनं कुर्यात् । पूजनम् ॥ ओं महादेवाय नमः ॥ विसर्जनम् ॥

पार्थिवस्य च लिङ्गस्य यन्माया पूजनं कृतम् ॥ अनेन भगवान् रुद्रो वाञ्छितार्थं प्रयच्छतु॥इति प्रणम्य लिङ्गानि विसर्जयेत् । नमो भवाय रुद्राय शिवाय च नमो नमः । ईशानाय वृषाङ्काय भीमोग्राभ्यां नमो नमः ॥ महादेवाय गुप्ताय वासुदेववराय च । वासुदेवाय शान्ताय तथोमापतये नमः ॥ नमश्च नीलकण्ठाय शितिकण्ठाय ते नमः । गोपते शङ्करायैव सदा सर्वमयाय च ॥ प्रातस्सम्पूज्य सायं च कृताञ्जलिपुटः स्थितः । ऊनाविंशतिनामानि पठते यो नरोत्तमः ॥ स पापैर्मुच्यते सर्वैर्देविदैवैश्च पूज्यते । तस्य स्तोत्रस्य पठनाद्दहेत्पापं शिवं व्रजेत्॥ वारं वारं प्रणमेत् । अर्द्धचन्द्राकारां प्रदक्षिणां कुर्य्यात् । गच्छ गच्छ परं स्थानं स्वस्थानं परमेश्वर । पूजाराधनकाले च पुनरागमनाय च ॥ ओं साम्बशिवपूजितोसि प्रसीद शिव स्वस्थानं गच्छेति वदेत् ।

॥ अथ शिवरात्रौ प्रहरचतुष्टये पूजाविधिः ॥

न स्नानेन न वस्त्रेण न च धूपेन नार्चया। तुष्यामि न तथा पुष्पैर्यथा रात्र्युपवासतः ॥ ततो रात्रौ प्रकर्तव्यं शिवप्रीणनतत्परैः। प्रहरे प्रहरे स्नानं पूजा चैव विशेषतः॥ अत्र वीप्सया प्रहरचतुष्टयपूजनं प्रतीयत इति। नरसिंहचर्य्यायाम् । शैवो वा वैष्णवो वापि यदि स्यादन्यपूजकः। सर्वं पूजाफलं हन्ति शिवरात्रिबहिर्मुखः ॥ संवत्सरप्रदीपे। दुग्धेन प्रथमं स्नानं दध्ना चैव द्वितीयके । तृतीये तु यथाज्येन चतुर्थे मधुना तथा ॥ ईशानसंहितायाम् । फाल्गुने कृष्णचतुर्दश्यां रविवारो यदा भवेत्। भौमो वापि भवेद्देवि कर्तव्यं व्रतमुत्तमम् ॥ शिवयोगस्य योगेन तद्भवेदुत्तमोत्तमम्। शिवरात्रिव्रतं नाम सर्वपापविनाशनम् ॥ आचाण्डालमनुष्याणां भुक्तिमुक्तिप्रदायकम् । नागरखण्डे ॥ उपवासप्रभावेण बलादपि च जागरात्। शिवरात्रेस्तथा तस्य लिङ्गस्यापि प्रपूजनात् ॥ अक्षयान् लभते कामान्शिवसायुज्यमाप्नुयात् ॥ पद्मपुराणे ॥ वर्षे वर्षे महादेवि नरो नारी पतिव्रता। शिवरात्रौ महादेवं कामभक्त्या प्रपूजयेत् ॥ ईशानसंहितायाम् ॥ एवमेव व्रतं कुर्यात्प्रतिसंवत्सरं व्रती। चतुर्दशाब्दिकं तद्धि चतुर्विंशाब्दिकं तथा ॥ सर्वान् कामानवाप्नोति सर्वपापैः प्रमुच्यते

॥ अथ प्रयोगः ॥ प्रातरुदङ्मुखः । ओं तत्सदित्युच्चार्य सूर्यसोम इति पठित्वा जलादीन्यादाय । शिवरात्रिव्रतं ह्येतत्करिष्ये हं महाफलम । निर्विघ्नमस्तु मे चात्र त्वत्प्रसादाज्जगत्पते ॥ इत्यनेन व्रतनियमग्रहणं कुर्यात् । पुनर्जलमादाय । ओं सौभाग्यादिसमस्तभोगमोक्षावाप्तिकामः शिवरात्रिव्रतमहं करिष्ये । इति । ततो मन्त्रं पठेत् । चतुर्दश्यां निराहारो भूत्वा शम्भोः परेऽहनि । भोक्ष्येहं भुक्तिमुक्त्यर्थं शरणं मे भवेश्वर ॥ ततो रात्रौ प्रथमप्रहरे प्रतिष्ठिते लिङ्गे अप्रतिष्ठिते वा प्रतिष्ठां विधाय पूजां कुर्यात् । हः अस्त्रायफडिति पादघातत्रयेण भूमिं निःसार्य्य तेनैव तालत्रयेण करत्रुटिकया दिग्बन्धनं भूतशुद्ध्यादिकं च विधाय । हां हृदयाय नमः । हीं शिरसे स्वाहा । हुं शिखायै वषट् । हैं कवचाय हुं । हौं नेत्रत्रयाय वौषट् । हः अस्त्राय फट् इति तालत्रयम् । छोटिकया दशदिग्बन्धनं कृत्वा हौमिति मन्त्रेण प्राणायामं विधाय पार्थिवशिवलिङ्गे उक्तविधिना शिवं पूजयेत् । तत्रायं विशेषः । हौं ईशानाय नमः । प्रथमप्रहरे दुग्धेन स्नापयित्वा पुनर्जलेन स्नापयेत् ततः । शिवरात्रिव्रतं देव पूजाजपपरायणः । करोमि विधिवद्दानं गृहाणार्घं महेश्वर । इत्यनेनार्घ्यं दत्वा गन्धादिभिः पूजयित्वा प्रणम्य गीतवाद्यस्तवपाठतत्कथाश्रवणादिभिः

प्रहरं नयेत्। तद्ध्यानं तज्जपः स्नानं तत्कथाश्रवणादिकम्। उपवासकृतो ह्येते गुणाः प्रोक्ताः पुरातनैः। अथ द्वितीयप्रहरे। ह्रीं ओं अघोराय नमः। इति गन्धस्नानम्। ततः ॐ नमः शिवाय शान्ताय सर्वपापहराय च। शिवरात्रौ ददाम्यर्घ्यं प्रसीद उमया सह। इत्यर्घ्यं दत्वा पूजादिकं पूर्ववत्। ततस्तृतीयप्रहरे। ॐ ह्रौं सद्योजाताय नमः। इति घृतेन स्नानम्। अर्घ्यमन्त्रस्तु। दुःखदारिद्र्यशोकेन दग्धोहं पार्वतीप्रिय। शिवरात्रौ ददाम्यर्घ्यमुमाकान्त प्रसीद मे। अन्यत्प्रथमप्रहरवत्कुर्य्यात्। चतुर्थप्रहरे। ॐ ह्रौं तत्पुरुषाय नमः। इति मधुना स्नानम्। अर्घ्यमन्त्रस्तु। मया कृतान्यनेकानि पापानि हरशङ्कर। शिवरात्रौ ददाम्यर्घ्यमुमाकान्त गृहाण मे। अन्यत्पूर्ववत्। ततः ॐ नमः शिवायेति मूलमन्त्रं जप्त्वा अविघ्नेनेति मन्त्रं पठेत्। मन्त्रो यथा। ॐ अविघ्नेन व्रतं देव त्वत्प्रसादात्समर्पितम्। क्षमस्व जगतां नाथ त्रैलोक्याधिपते हर॥ यन्मयात्र कृतं पुण्यं तच्च तुभ्यं निवेदितम्। त्वत्प्रसादान्महादेव व्रतमद्यसमर्पितम्। प्रसन्नो भव मे देव सद्गतिं देहि शङ्कर। त्वदालोकनमात्रेण पवित्रोऽस्मि न संशयः। ततः परदिने ब्राह्मणान् भोजयित्वा मन्त्रं पठेत्। यथा॥ संसारक्लेशदग्धस्य व्रतेनानेन शङ्कर।

T

प्रसीद सुमुखो नाथ ज्ञानदृष्टिप्रदो भवेत्युक्त्वा स्मरणं कुर्यात् । इति शिवरात्रिपूजाविधानं सम्पूर्णम् ।

अथ शिवपूजायां विशेषः।रात्रावुदङ्मुखः कुर्यात्पूजां पूर्वमुखो दिवा ॥ शिवार्चनं सदाप्येवं शुचिः कुर्यादुदङ्मुखः। सदेति दिवारात्रौ । अत्र हेतुं दर्शयति रुद्रयामले । न प्राचीमग्रतः शम्भोर्नोदीचीं शक्तिसंस्थिताम् । न प्रतीचीं यतः पृष्ठमतो दक्षं समाश्रयेत् ॥ यजमानः । शम्भोः प्राचीमवस्थितो यजनं न समाश्रयेत् । शम्भोर्जगत्संहारकस्याग्रतः साम्मुख्यात् । पञ्चवक्त्रपक्षे प्रधानं वक्त्रं प्राचास्तुस्थितम् । एकवक्त्रपक्षे तद्रुपमाहादित्यपुराणे ॥ सौम्यमौलीन्दुसूच्यक्षमेकवक्त्रं चतुर्भुजम् । शूलपङ्कजहस्तं च वरदाभयपाणिकम् ॥ आयताक्षं सुराराध्यं सर्वाभरणभूषितम् । शिवरूपं गृहे कुर्यात्प्रासादे वाप्यनिन्दितम् । अत्राग्रे पूजानिषेधात् । देवाग्रे स्वस्थचाप्यग्रे प्राची प्रोक्ता गुरूत्तमैरित्यस्य न विषय इति किन्त्वभिधानादिप्रसिद्धप्राची परा ग्राह्या एतदनुसारादेव वक्ष्यमाणपूर्वाद्याग्नेयान्तपूजा यत्रैव भानुस्तु वियत्युदेति प्राचीति तां वेदविदो वदन्ति। अतः परां पूजकदेवयोश्च सदाऽऽगमज्ञाः प्रवदन्ति तां चेति वचनात् । अथ विशेषं

दर्शयति लिङ्गपुराणम् । विना भस्मत्रिपुण्ड्रेण विना रु·

( १ ) श्रीकृष्णदशः ।

तत्र तिलककरणमावश्यकं ब्रह्मपुराणे । कर्मादौ तिलकं कुर्याद्रूपं तद्वैष्णवं परम् । तथा ब्रह्माण्डपुराणे " यागो दानं तपो होमः स्वाध्यायः पितृतर्पणम् । भस्मी भवति तत्सर्वमूर्ध्वपुण्ड्रं विना कृतम् ॥

अथ मृदाद्यभावे जलेनापीदं विधेयम् । तथोशनोवचनम् " अभावे तूदकेनापि पुण्ड्री दैवतमर्चयेदिति,, अत्र स्नानानन्तरे कर्माणि तिलकविधानं स्नानं विना तिलकनिषिद्धं स्मृतिदीपिकायाम् । तथान्यदपि ब्रह्माण्डे "मृत्तिकां चन्दनं चैव भस्म तोयं चतुर्थकम् । एभिर्द्रव्यैर्यथाकालमूर्ध्वपुण्ड्रं सदा भवेत् । स्नात्वा पुण्ड्रं मृदा कुर्यात् हुत्वा चैवन्तु भस्मना । देवानभ्यर्च्य गन्धेन सर्वपापापनुत्तये । जलेन तिलकं कुर्याज्जलान्तः कर्मसिद्धये ॥ तथान्यदपि "ऊर्ध्वपुण्ड्रं मृदा कुर्याद्भस्मना तु त्रिपुण्ड्रकम् । उभयं चन्दनेनैव अभ्यङ्गोत्सवरात्रिषु ॥

अथ भस्मविधिः ॥ सर्वेषामेव भूतानां शम्भोर्लिङ्गमनुत्तमम् । सितेन भस्मना कार्यं ललाटे तत्त्रिपुण्ड्रकम् ॥ सर्वशब्दोपादानाद्ब्रह्मविष्णूपासकयोरपि भस्मना त्रिपुण्ड्रं विहितम् ॥ तथा स्मृतिसुधाकरे "अप्रसूताया गोर्भूमिसम्बद्धव्यतिरेकेण गृहीतगोमयस्य भस्मना तदभावे आरण्यकभस्मनापि तिलकं विहितम् । तथा सङ्ग्रहे "अग्निहोत्राग्निजं भस्म विरजाहोमजं तथा । औपासनसमुत्पन्नं समिदग्निसमुद्भवम् । समिदग्निसमुत्पन्नं धार्यं वै ब्रह्मचारिणा । शूद्राणां श्रोत्रियागारपचनाग्निसमुद्भवम् । अन्येषामपि सर्वेषां धार्यं दावानलोद्भवम् । तथा स्कान्दे "अग्निहोत्राग्निजं भस्म अग्निकार्योद्भवं तथा । औपासनात्समुत्पन्नं लक्षथोहोमोद्भवंतथा । महारुद्राग्निजं भस्म रुद्रस्थानोद्भवं तथा । भस्मानि षड्विधान्याहुः सर्वपापहराणिच । त्रैवर्णिकानां सर्वेषामग्निहोत्रोद्भवं तथा । अग्निकार्यसमुत्पन्नं तद्धार्यं ब्रह्मचारिणा । आवसथ्याग्निसम्भूतं गृहस्थैरेव धार्यते । शेषं भस्म त्रयं चैव सर्वैः सर्वत्र धार्यते । देवर्षिकृतहोमस्थं धार्यं यत्नेन

सर्वदा " इति विधानपारिजातः । तन्माहात्म्यं धर्माधर्मप्रबोधिन्याम् "श्राद्धे होमे जपे दाने वैश्वदैवशिवार्चने कृतत्रिपुण्ड्रः पूतात्मा सर्वं भवति चाक्षयम् । न-चोर्द्ध्वं धारयेद्भूर्तिं न तिर्यग्गोपिचन्दनम् । तिर्यगूर्ध्वं च धृतं च धारयेच्चन्दनादिकम् । भूतप्रेतपिशाचा ये दुर्वारा वैरिणो ग्रहाः । निरर्थका भवन्त्येते तिलकं वीक्ष्य-तत्क्षणात् । अथ स्मृतिरत्नावल्यां भस्मधारणप्रदेशः । ललाटे हृदये नाभौ गलांसे बाहुसन्धिषु । पृष्ठदेशे शिरस्यैवं स्थानेष्वेतेषु धारयेत् । अथ तद्धारणम-न्त्रः । त्र्यायुषं यमदग्नेरिति ललाटे । कश्यपस्यत्र्यायुषमिति कण्ठे । यद्देवेषु त्र्यायुषमिति बाहुद्वयमूले । तन्नोऽस्तुत्र्यायुषमिति हृदये । शैवपञ्चाक्षरेणैव तत्करणमिति केचित् । अत्र धारणे पुलस्त्यो मन्त्रानाह । अग्निरित्यादिभिर्मन्त्रैः शुद्धं भस्मा-भिमन्त्रितम् । शिवमन्त्रेण तद्धार्यं मन्त्रेणाष्टाक्षरेण वा । गायत्र्या वा च देवर्षे मन्त्रेण प्रणवेन वा । करोति शिवमन्त्रेण यस्त्रिपुण्ड्रं द्विजोत्तमः । स्थूलःशूलधरः सौम्यः शि[illegible] लोके महीयते । अष्टाक्षरेण मन्त्रेण यःकरोति त्रिपुण्ड्रकम् । विष्णोः पदमवाप्नोति ना-न्यथा श्रुति भाषितम् । सौरम्पदमवाप्नोति गायत्र्या मुनिसत्तम । प्राप्नोति ब्रह्मणो रू-पं प्रणवेन न संशयः भस्माभिमन्त्रणमिस्त्रस्य पिप्पलादिऋषिर्गायत्री च्छन्दः रुद्रो देव-ता भस्मशुद्धौ विनियोगः । अग्निमन्त्रः । भस्मवायुरिति भस्मस्थलमिति भस्मव्योमेति च भस्म सर्वं ह वा इदं भस्ममन एतानि चक्षुंषि भस्मानीति । तथा प्रयोगपारिजाते "धार्यं भस्म त्रिसन्ध्यन्तु गृहिणा जलसंयुतम । सर्वकाले भवेत् स्त्रीणां यतीनां जलवर्जि-तम् । वानप्रस्थस्य कन्यानां दीक्षाहीननृणां तथा । मध्यान्हात् प्राग्जलैर्युक्तं परतो जलवर्जितम् । मध्याङ्गुलित्रयेणैव स्वदक्षिणकरस्य तु । स्मृतिरत्नावल्यां "मध्यमानामिकाङ्गुष्ठैरनुलोमविलोमतः । नेत्रयुग्मप्रमाणं तु त्रिपुण्ड्रं धारये-द्द्विजः । अत्र विशेषतीर्थादिमृदा चोर्ध्वरूपं तथा भस्मना त्रिपुण्ड्ररूपं सच्छिद्रं चन्दनं यथेच्छया तिलकं विहितम् । तथा भस्मना चोर्ध्वपुण्ड्रस्य विधिनिषिद्धाविति ॥ तथान्यदपि । तिलकम् स्यादङ्गुष्ठः पुण्यकरो मध्यमायुः करो तथा ॥ अना-मिका श्रीकरी च तर्जन्या भक्तिरेव च ॥

द्राक्षमालया । पूजितोपि सदा शम्भुर्न स्यात्तस्य फलप्रदः ॥ तस्मान्मृदापि कर्तव्यं ललाटे च त्रिपुण्ड्रकमिति स्कन्दपुराणे। रुद्राक्षं कण्ठदेशे दशन ३२ परिमितं मस्तके विंशती द्वे ४०। षट्षट्कर्णप्रदेशे ६। ६ करमणियुगले द्वादश द्वादशैव १२। १२। बाह्वोरिन्दोः कलाभिः १६।१६ पृथगिति च शिखासूत्र एकं १ मनुष्यो वक्षस्यष्टोतरं १०८ यः कलयति च शतं स स्वयं नीलकण्ठ इति।संवत्सरप्रदीपे। त्रिपुरस्य बधे काले रुद्रस्याक्ष्णोः पतन्ति ये अश्रूणाविन्दवस्ते तु रुद्राक्षा अभवन् भुवि ॥ अथ स्कान्दे। एकद्वित्रिचतुष्पञ्च षट् सप्त वसवो नव। दशैकादश द्वादश त्रयोदश चतुर्दश॥ एतेषां तु मुखानां हि देवता स च शङ्करः। गुह्यं गुह्यतरं देव कथयस्व यथार्थतः॥ ॥ श्रीशङ्कर उवाच ॥ शृणु षण्मुख तत्वेन वक्त्रे वक्त्रे यथाक्रमम्। एकवक्त्रः शिवः साक्षाद्ब्रह्महत्यां व्यपोहति ॥ द्विवक्त्रो देवदेवश्च गोबधादिविनाशकः। त्रिवक्त्रो दहनः साक्षाद्भ्रूणहत्यां व्यपोहति ॥ चतुर्वक्त्रः स्वयं ब्रह्मा नरहत्यां व्यपोहति। पञ्चवक्त्रः स्वयं रुद्रः कालाग्निर्नामनामतः॥अगम्यागमने चैव अभक्ष्यस्यापि भक्षणे। मुच्यते सर्वपापेभ्यः पञ्चवक्त्रस्य धारणात्। षट्वक्त्रः कार्त्तिकेयस्तु धर्तव्यो दक्षिणे भुजे। ब्रह्महत्यादिभिः

T

पापैर्मुच्यते नात्र संशयः ॥ सप्तवक्त्रो महासेन अनन्तो नाम नागराट् । गुरुतल्पादिभिः पापैर्मुच्यते नात्र संशयः । अष्टवक्त्रो महासेनः साक्षाद्देवो विनायकः । पृष्ठोदरकरेणापि संस्पृशेद्वा गुरुस्त्रियम् । एवमादीनि पापानि ह्यतिपापानि सर्वशः । विघ्नास्तस्य विनश्यन्ति मुक्तो याति परां गतिम्॥ एते गुणा भवन्त्यस्य अष्टवक्त्रस्य धारणात् । नवास्यो भैरवः साक्षाद्धारयेद्वामके भुजे॥ कापिलो मुक्तिदः साक्षान्मम तुल्यफलं लभेत् । लक्षकोटिसहस्राणि ब्रह्महत्यां करोति यः॥ तत्सर्वं दहते शीघ्रं नववक्त्रस्य धारणात् । दशवक्त्रो महासेनः साक्षाद्देवो जनार्दनः॥ ग्रहाश्चैव पिशाचाद्या वेताला ब्रह्मराक्षसाः।सर्पाश्च सर्वे नश्यन्ति दशवक्त्रस्य धारणात्॥ एकादशास्य रुद्राक्षो रुद्रा एकादश स्मृताः । शिखायां धारयेन्नित्यं तस्य पुण्यफलं शृणु॥ अश्वमेधसहस्रस्य वाजपेयशतस्य च। हेमशृङ्गस्य लक्षस्य सम्यग्दत्तस्य यत्फलम् ॥ तत्फलं समवाप्नोति रुद्रवक्त्रस्य धारणात् । रुद्राक्षो द्वादशास्य स्तु कण्ठदेशे च धारयेत् ॥ आदित्यस्तुष्यते नित्यं द्वादशार्कव्यवस्थितम्। एवं त्रयोदशास्यश्च चतुर्दशमुखस्तथा अनन्तफलदावेतौ गुणं वक्तुं न शक्यते। चतुर्दशमुखं चैवं शिखायां धारयेद्बुधः। विना मन्त्रेण रुद्राक्षं यो धत्ते भुवि मानवः। स याति नरकं

घोरं यावदिन्द्राश्चतुर्दश ॥ रुद्राक्षस्य प्रतिष्ठायां मन्त्रः पञ्चाक्षरः स्मृतः । ॐ त्र्यम्बकं वा अघोरमन्त्रं विशेषेण प्रयोजयेत् । पञ्चामृतं पञ्चगव्यं स्नानकाले प्रयोजयेत् । अल्पेनापि च मन्त्रेण रुद्राक्षस्य द्विजोत्तम ॥ प्रतिष्ठां विधिवत्कुर्यात्ततोधिकफलं लभेत् । ततो यथा सुमन्त्रेण धारयेद्भक्तिसंयुतः ॥ अथात्र मन्त्रो यथा । ओं ओं भृँशँ नमः १ ॐ ॐ नमः २ ॐ ह्रीं नमः ३ ॐ हूं नमः ४ ॐ हुंनमः ५ ॐ ॐ हुँ हुं नमः ६ ॐ सः हूं नमः ७ ॐ हं नमः ८ ॐ ह्रीं नमः ९ ॐ श्रीं नमः १० ओं ह्रीं हूंनमः ११ ओं क्षां क्षौं नमः १२ ओं नमः १३ ओं नमो नमः १४ अथ प्रकारान्तरोक्तमन्त्राः ओंऐं १ ॐ श्री २ ॐ कूं ३ ओं द्रः ४ ॐ ह्रीं ५ ॐ ह्रीं ६ ॐ ह्रीं ७ ओं ब्रूं शं ८ ओं ह्रां ९ ओं ह्रीं १० ओं ह्रीं ११ ओं क्ष्रौं स्त्रीं १२ ओं उमां १३ ओं नमो नमः १४ यथाप्येकादिचतुर्दशमुखरुद्राक्षेषु फलमन्त्रविशेषाः सन्ति तथापि सुलभत्वात्पञ्चवक्ररुद्राक्षं विधिपूर्वकं धारयेत् । पञ्चवक्त्रः स्वयं रुद्रः कालाग्निर्नामनामतः । अगम्यागमने चैव अभक्ष्यस्यापि भक्षणे ॥ मुच्यते सर्वपापेभ्यः पञ्चवक्त्रस्य धारणात् । इत्युक्तेः । ओं हुं नम इति प्रत्येकमष्टोत्तरशतं जप्त्वाम्भसा प्रक्षाल्य धारयेत् । लिङ्गपुराणे । आयुष्मान् बलवान् श्रीमान् पु-

त्रवान्धनवान् सुधीः । वरमिष्टं लभेल्लिङ्गं पार्थिवं यः स-
मर्चयेत् । तस्मात्पार्थिवं लिङ्गं ज्ञेयं सर्वार्थसाधनम् । वा
र्क्षं वित्तप्रदं ज्ञेयं स्फाटिकं सर्वकामदम् ॥ नार्मदं गिरिजं
श्रेष्ठमन्यदपीहलिङ्गवत् । कालकौमुद्याम् । अक्षादल्पप्र
माणं हि न लिङ्गं कुत्रचिन्नरः । कुर्वीताङ्गुष्ठतो ह्रस्वं न
कदाचित्समाश्रयेदिति । अक्षोऽशीतिरक्तिका । ब्रह्मपुरा
णे । यावन्न दीयते चार्घो भास्कराय निवेदितः । तावन्न
पूजयेद्विष्णुं शङ्करं च महेश्वरीम् ॥ सर्वत्रैव प्रशस्तोऽब्जः
शिवसूर्यार्चनं विना । अब्जः शङ्खः । तल्लिङ्गे पूजयेन्मन्त्री
सर्वदेवान् पृथक् पृथक् । देवीपुराणे । मृदाहरणसङ्घट्टौ
प्रतिष्ठाह्वानमेव च । स्नपनं पूजनं चैव विसर्ज्जनमतः
परम् ॥ हरो महेश्वरश्चैव शूलपाणिः पिनाकधृक् । पशुप-
तिः शिवश्चैव महादेव इति क्रमात् ॥ अत्र पूर्वोक्तसप्तक-
र्म्माणि परवचनोक्तसप्तनामभिः क्रियास्वरूपविभक्तिमभि-
धाय यथा यथं कार्याणि । अदृष्टार्थयोरर्थक्रमासम्भवे पा-
ठक्रमादेवावाहनात्प्राक् प्रतिष्ठा श्राद्धे कुशासनदानवदि-
ति तत्रानुष्ठानम् । यथा ओं हराय नम इति मृदाहरणम् ।
ओं महेश्वराय नम इति सङ्घट्टनम् । ॐ शूलपाणये नम
इति प्राणप्रतिष्ठा । ततो ध्यानम् । ध्यायेन्नित्यं महेशमि-
त्यादिना । ततः ओं पिनाकधृषे नम इत्यावाह्य । ओं पशु-

पतये नम इति स्नपनं विधाय। ॐ शिवाय नम इति पूजयेत्। विसर्जनात्पूर्वं प्राच्यैशान्याद्यष्टदिक्षु वामावर्तेन पूजनं। ॐ शर्वाय क्षितिमूर्तये नमः। पूर्वे १। ॐ भवाय जलमूर्त्तये नमः ऐशान्याम् २ ॐ रुद्रायाग्निमूर्त्तये नम उत्तरे ३ ॐ उग्राय वायुमूर्तये नमः वायव्याम् ४। ॐ भीमायाकाशमूर्त्तये नमः पश्चिमे ५ ॐ पशुपतये यजमानमूर्तये नमो नैर्ऋत्याम् ६ ॐ महादेवाय सोममूर्त्तये नमः दक्षिणे ७। ॐ ईशानाय सूर्यमूर्तये नमः आग्नेय्याम् ॥ मूर्तयोष्टौ शिवस्यैताः पूर्वादिक्रमयोगतः। आग्नेयान्ताः। प्रयोज्यास्तु वेद्यां लिङ्गे शिवं यजेत् ॥ नान्दिपुराणे। गोभूवस्त्रहिरण्यादिबलिपुष्पान्निवेदयेत्। ज्ञेयो नमः शिवायेति मन्त्रः सर्वार्थसाधकः॥ सर्वमन्त्राधिकश्चायमोङ्काराद्यः षडक्षरः। भविष्यपुराणे पञ्चाक्षरमुपक्रम्य अपवित्रः पवित्रो वा सर्वावस्थां गतोपि वा। महापातकयुक्तोपि मन्त्रस्यास्य जपात्तथा। अधिकारी भवेत्सर्व इति देवोऽब्रवीच्छिवः। तथा सर्वेषामेव पात्राणां परं पात्रं महेश्वरः। पतन्तं धारयेद्यस्मादतीवनरकार्णवात् ॥ शिवमुद्दिश्य यद्दत्तं सर्वकारणकारणम्। तदनन्तफलं दातुर्भवतीह किमद्भुतम्॥शिवधर्मे। तरुजात्पुष्पफलैस्तोयैः पत्रैरपि च यत्फलं। तदनन्तफलं ज्ञेयं भक्तिरेवात्र कार-

णम् ॥ भविष्ये । लिङ्गानुलेपनं कार्यं दिव्यगन्धैस्तु गन्धिभिः । वर्षकोटिशतं दिव्यं शिवलोके महीयते ॥ स्कन्दपुराणे । शुष्काण्यपि च पत्राणि श्रीवृक्षस्य सदैव तु । दातव्यानि नरैर्भक्त्या शिवभक्तिमभीप्सुभिः ॥ भविष्ये । धत्तूरैरपि यो नित्यं सकृत्पूजयते शिवम् । गोलक्षफलं प्राप्य शिवलोके महीयते ॥ बिल्वपत्रैरनत्तैश्च यो लिङ्गं पूजयेत् सकृत् । सर्वपापविनिर्मुक्तः शिवलोके महीयते । तथाच । सर्वकामप्रदं बिल्वं महादारिद्र्यनाशनम् । बिल्वपत्रात्परं नास्ति येन तुष्यति शङ्करः । केशकीटापविद्धानि निशिपर्युषितानि च । स्वयं पतितपुष्पाणि त्यजेदुपहतान्यपि ॥ देवदारुसमेतं च सर्जश्रीवासकुन्दुरुम् । श्रीफलं चाज्यमिश्रं च दत्वाप्नोति परां गतिम् ॥ सर्जः शालरसः कुन्दुरु शैलेयम् । एभ्यः सौगन्धिकं धूपं षट्सहस्रगुणोत्तरम् । अगुरुं शतसाहस्रं द्विगुणं चासितागुरुम् ॥ गुग्गुलुं घृतसंयुक्तं साक्षाद्गृह्णातिशङ्करः । तैलेनापिहि योदद्याद्घृताभावेन मानवः ॥ तेन दीपप्रदानेन शिववद्राजते दिवि । नन्दिकेश्वरपुराणे । शालितण्डुलप्रस्थस्य कुर्यादन्नं सुसंस्कृतम् । शिवायतं चरुं दद्याच्चतुर्दश्यां विशेषतः ॥ शिवसर्वस्वे च । एकमाम्रफलं पक्वं यः शिवायनिवेदयेत् । वर्षाणामयुतं भोगैः क्रीडते

शिवमन्दिरे ॥ एकं मोचाफलं पक्वं यः शिवाय निवेदयेत् । वर्षलक्षं महाभोगैः शिवलोके महीयते ॥ नैवेद्यं घृतसंयुक्तं मधुपक्वं निवेदयेत् । अग्निष्टोमस्य यज्ञस्य फलं प्राप्नोति मानवः ॥ शिवधर्मे । लिङ्गवेदी भवद्देवी लिङ्गसाक्षान्महेश्वरः। तयोः सम्पूजनात्स्यातां देवी देवश्च पूजितौ॥ देवीपुराणे । सव्यं व्रजेत्ततोसव्यं प्रणालीं नैव लङ्घयेत् । एकीभूतमतो रुद्रं यः कुर्यात्त्रिः प्रदक्षिणम् ॥ क्षणात्तस्य भवेन्मुक्तिर्न तस्य पुनरुद्भवः । भविष्ये । जानुभ्यां चैव पाणिभ्यां शिरसा च विचक्षणः । कृत्वा प्रणामं देवेशे सर्वान्कामानवाप्नुयात् । महाभारते । सर्वलक्षणहीनोपि युक्तो वा सर्वपातकैः । सर्वं तरति तत्पापं भवाय शिरसा नमन् ॥ ततो वारं वारं प्रणम्य ॐ वामदेवाय नमः इति मन्त्रेण संहारमुद्रया विसृज्य तदुच्छिष्टेन चण्डोग्रशूलपाणिं सम्पूज्य विष्णुनिर्माल्ययुक्तशिवनिर्माल्यं शिरसा धारयेत् । अग्राह्यं शिवनिर्माल्यं पत्रं पुष्पं फलं जलम् । शालग्रामशिलास्पर्शात्सर्वं याति पवित्रतामिति । अथ पार्थिवलिङ्गानां विशेषपूजाप्रकारः । श्रीमन्त्रमहोदधौ । यथा । साधकः स्नात्वा नित्यकर्म कृत्वा शुचिभूमिं गत्वा उपरिस्थां मृत्तिकामपाहृत्य । हूँ पृथिव्यै नम इत्यभिमन्त्र्य मृत्तिकां गृहीत्वा तामवलोक्य निःशर्करां कृत्वा शुद्धपात्रे

नित्यशिवपूजार्थं निदध्यात्। ततः शुभदिने बालगणेश-कुमारयोर्मन्त्रौ हरादिकान् सप्तमनूनपि पूजासिद्ध्यर्थं सद्गुरोस्सकाशाद्गृह्णीयात्। ह्रीं गं ग्लौं गणपतये ग्लौं गं ह्रीं इति गणेशमन्त्रः। ऐं क्षुं क्षुं क्षीं कुमाराय नमः इति कुमारमन्त्रः। ऊँ नमो हराय महेश्वराय। ओं नमः शूलपाणये। ओं नमः पिनाकिने। ओं नमः पशुपतये। ओं नमः शिवाय। ओं नमो महादेवाय इति सप्तमनूनपि सङ्गृह्य शुभदिने स्वेष्टसिद्ध्यर्थं शिवार्चनमारभेत्। तद्य-था। कृतनित्यक्रियः सूर्यायार्घ्यं दत्वा मृत्तिकामादाय। वमित्यभिमन्त्रितेन जलेनाभिषिच्य स्वेष्टप्रमाणां पिण्ड-येत्। तां पात्रे निधाय सङ्कल्पं कुर्यात्। स यथा। अ-मुकगोत्रस्यामुकशर्मणो मम मनोभिलषितकार्यसिद्ध्यर्थं यथासङ्ख्यकपार्थिवलिङ्गपूजनमहं करिष्ये। इति सङ्क-ल्प्य मृत्पिण्डान् मृदं गृहीत्वा गणपतिमन्त्रेण वराभय-लसत्पाणिकमलं बालगणेशं निर्माय पीठे संस्थाप्य स्व-मन्त्रेण सम्पूज्य हरमन्त्रेण ओं नमो हराय इति मन्त्रेण। शतमात्राधिकां मृदं गृहीत्वा। ओं नमो महेश्वराय इति म-न्त्रेण अङ्गुष्ठमानादधिकं वितस्त्यवधि मनोहरं लिङ्गं-तुल्यप्रमाणं तुल्यरूपं रचयेत्। ततः ओं नमः शूलपाणये इति लिङ्गं पीठे संस्थापयेत्। ततोऽवशिष्टमृदा कुमार-

मन्त्रेण कुमारं कृत्वा लिङ्गपङ्क्त्यन्ते संस्थाप्य स्वम. न्त्रेण पूजयेत्। ततः प्रतिलिङ्गस्थं हरम्। ॐ नमः पिनाकिने इति मन्त्रेण समावाह्य ध्यायेत्। तद्यथा। द. क्षाङ्गस्थं गजपतिमुखं प्रामृशन् दक्षदोष्णावामोरुस्था द्रिपतितनयाङ्के गुहं चापरेण। इष्टाभीतीपरकरयुगे धारयन्निन्दुकान्तिरव्याद् व्यस्तत्रिभुवनमदो नीलकण्ठ. स्त्रिनेत्रः॥ एवं ध्यात्वा ॐ नमः पशुपतये इति मन्त्रेण शिवं स्नापयेत्। ततः। ॐ नमः शिवायेति मन्त्रेण ग. न्धादीन् समर्प्य पूर्वादिवामावर्तेन दशदिक्षु शर्वादीन् पूजयेत्। तद्यथा। ॐ शर्वाय क्षिति मूर्तये नमः पूर्वे। ॐ भवाय जलमूर्तये नमः ऐशान्यां। ॐ रुद्रायाग्निमूर्तये नमः उत्तरे। ॐ उग्राय वायुमूर्तये नमः वायव्याम् ॐ भी. मायाकाशमूर्तये नमः पश्चिमे। ॐ पशुपतये यजमानमू. र्तये नमः नैर्ऋत्याम्। ॐ महादेवाय सोममूर्तये नमः दक्षिणे। ॐ ईशानाय सूर्यमूर्तये नमः अग्निकोणे। तत इन्द्रादीन् वज्रादीनपि पूर्वादिदक्षिणावर्तेन पूजयेत्। ततो धूपं दीपं नैवेद्यं दत्वा वारं वारं, नत्वा प्रदक्षिणाम. र्द्धचन्द्राकृतिं कृत्वा मन्त्रजपं कृत्वा स्तवादिकं पठित्वा संहारमुद्रया विसृज्य गणेशकार्तिकेयावपि विसृजेत्। अ, थ कामनाभेदेन ध्यानमुक्तम्। तत्रैव। तद्यथा। धनपुत्रा,

दिकामैस्तु शिवोर्च्यः । प्रोक्तलक्षणः । विद्याकामैश्चिन्तनीयः परशुंहारिणं वरम् । ज्ञानमुद्रां दधद्धस्तैर्वटमूलमुपाश्रितः ॥ अथ सन्धिकरणार्थं ध्यानम् । पुंसोर्विरुद्धयोः सन्धौ कुर्याल्लिङ्गानि साधकः ॥ नदीतीरादपानीतमृदा तानि च पूजयेत् । तत्र ध्येयो हरिहरः शङ्खपद्माहिशूलभृत्॥ इन्द्रानीलशरच्चन्द्रनिभोभूषणपुञ्जवान् ।अथ दम्पत्योर्विरोधशमनार्थं ध्यानमाह । दम्पत्योरविरोधार्थमर्द्धनारीश्वरःस्मृतः । पीयूषपूर्णकलशं दधत्पाशांङ्कुशावपि ॥ अथोच्चाटनमारणविद्वेषणार्थं ध्यानम् । उच्चाटे मरणे द्वेषे ध्यातव्यः पुनरीदृशः। कालीहस्ताम्बुजालम्बः शूलप्रोतस्त्विषां च यः । मुण्डमालालसत्कण्ठो शववित्रासिताखिलः॥

॥ अथ कार्यवशात्प्रयोगविधानमाह ॥

पूजयेत्कार्यवशतो लक्षावधि सहस्रतः । लक्षं पार्थिवलिङ्गानां पूजानाद्भक्तिमुक्तिभाक् ॥ लक्षं तु गुडलिङ्गानां पूजनात्पार्थिवो भवेत् । या नारी गुणलिङ्गानि सहस्रं पूजयेत्सती ॥ भर्त्तुःसुखमखण्डं सा प्राप्यान्ते पार्वती भवेत् नवनीतस्य लिङ्गानि सम्पूज्येष्टमवाप्नुयात् ॥ प्रातर्गोमयलिङ्गानि नित्यं वस्त्राणि पूजयेत् । वृहतीविल्वयोः पत्रैर्नैवेद्यं गुडमर्पयेत् ॥ इष्टफलावाप्तिः । भस्मना गोमयस्यापि वायुकायास्तथा फलम् । क्रीडन्ति बालका भूमौ लिङ्गं

कृत्वा रजोमयम्॥पूजयन्ति विनोदेन ते पि स्युः क्षितिनायकाः । एवं मासत्रये कुर्वन्ननल्पं लभते धनम् ॥ एकादशैव लिङ्गानि गोमयोत्थानि,पूजयेत् । प्रातर्मध्याह्नयोस्सायं निशीथे प्रतिवासरम् । स सर्वाः सम्पदो यायात्षण्मासादेवमाचरन् ॥ एकादश यजेन्नित्यं शालिपिष्टमयानि यः । लिङ्गानि मासमात्रेण स कल्मषचयं दहेत् । स्फाटिकं पूजितं लिङ्गं मनोनिकरनाशनम् । सर्वकामप्रदं पुंसामुदुम्बरसमुद्भवम् ॥ रेवामध्याश्मजं सर्वसिद्धिदं दुःखनाशनम् । यथाकथञ्चिल्लिङ्गस्य पूजा नित्यं कृतेष्टदा ॥ यो यजेत्पिचुमन्दोत्थैः पत्रैर्गोमयजं शिवम । क्रुद्धं महेश्वरं ध्यायन् स पराजयते रिपून् । यो लिङ्गं पूजयेन्नित्यं शिवभक्तिपरायणः । मेरुतुल्योपि तस्याशु पापराशिर्लयं व्रजेत् ॥ दोग्ध्रीर्गास्तुरगान्लक्षं यो दद्याद्वेदपाठिने । पार्थिवं योर्च्चयेल्लिङ्गं तयोर्ल्लिङ्गार्चको वरः ॥ चतुर्दश्यां तथाष्टम्यां पौर्णमास्यां विधुक्षये । पयसास्नापयेदीशं धरादानफलं व्रजेत् ॥ लिङ्पूजां विधायाग्रे स्तोत्रं वा शतरुद्रियम् । प्रजपेत्तन्मना भूत्वा शिवे स्वं विनिवेदयेत् ॥ यत्सङ्ख्याकं यजेल्लिङ्गं तन्मितं होममाचरेत् । आज्यान्वितैस्तिलैरग्नौ घृतैर्वा पायसेन वा॥शिवमन्त्रेण तस्यान्ते ब्राह्मणानपि भोजयेत्।एवं कृते समस्तेष्टसिद्धिर्भवति निश्चितम्॥

॥ अथ पूजायन्त्रसंस्कारः ॥

वामकेश्वरतन्त्रे। भैरव्युवाच। चक्रभेदं महादेव त्वत्प्रसादान्मया श्रुतम्। इदानीं श्रोतुमिच्छामि प्रतिष्ठाकर्मनिर्णयम्। श्रीशङ्कर उवाच॥ शृणु देवि महाभागे जगत्कारिणि कौलिनि। यन्त्रस्योद्यापनं कार्यं सर्वकर्मविनिर्णयम्॥ स्नात्वा सङ्कल्पयेन्मन्त्री गुरोरर्चनमाचरन्। पञ्चगव्यं ततः कृत्वा शिवमन्त्रेण मन्त्रितम्॥ तच्चक्रं निःक्षिपेन्मन्त्री प्रणवेन समाकुलम्। तदुद्धृत्य ततश्चक्रं स्थापयेत्स्वर्णपात्रके। पञ्चामृतेन दुग्धेन शीतलेन जलेन च॥ चन्दनेन सुगन्धेन कस्तूरीकुङ्कुमेन च। पयोदधिघृतक्षौद्रशर्कराद्यैरनुक्रमात्॥ तोयधूपान्तरैः कुर्यात्पञ्चामृतविधिं पुनः। हाटकः कलशैर्देवीमष्टभिर्वारिपूरितैः॥ कषायजलसम्पूर्णैः कारयेत्स्नानमुत्तमम्। स्नानं समाप्य तां देवीं स्थापयेत्स्वर्णपात्रके॥ स्पृष्ट्वा पात्रं कुशाग्रेण गायत्र्या चाभिमन्त्रयेत्। अष्टोत्तरशतं देवि देवताभावसिद्धये॥ आत्मशुद्धिं ततः कृत्वा षडङ्गैर्यजनं चरेत्। तत्रावाह्य महादेवीं जीवन्यासं च कारयेत्॥ उपचारैः षोडशभिर्महामुद्रादिभिः सदा। फलताम्बूलनैवेद्यैर्देवीं तत्र समर्चयेत्॥ पट्टसूत्रादिकं दद्याद्वस्त्रालङ्कारमेव च॥ मुकुरं चामरं घण्टां यथा योग्यं महेश्वरि। सर्वमेतत्प्रयत्नेन

दद्यादात्महिते रतः ॥ ततो जपेत्सहस्रं च सकलेप्सितासिद्धये । बलिदानं ततः । कुर्यात्प्रणमेच्चक्रराजकम् ॥ अष्टोत्तरशतं हुत्वा सम्पाताज्यं विनिः क्षिपेत् । होमकर्मण्यशक्तश्चेद्द्विगुणं जपमाचरेत् ॥ धेनुमेकां समानीय स्वर्णशृङ्गाद्यलङ्कृताम् । गुरवे दक्षिणां दद्यात् ततो देव्या विसर्जनमिति ॥

अथ पूजायन्त्रसंस्कारप्रकारः । कृतनित्यक्रियः स्वस्तिवाचनं कृत्वा सङ्कल्पं कुर्यात् अद्येत्याद्यमुकगोत्रोऽमुकशर्मा अमुकदेवतायाः पूजार्थममुकयन्त्रसंस्कारमहं करिष्ये । इति सङ्कल्प्य पञ्चगव्यमानीय हौमिति मन्त्रेणाष्टोत्तरशतमभिमन्त्र्य प्रणवेन यन्त्रं पञ्चगव्ये निःक्षिपेत् । तस्मादुत्थाप्य पात्रान्तरे स्थापयेत् । ततः शीतजलकुङ्कुमकस्तूरीभिः स्नापयित्वा धूपं दद्यात् । एवं दध्ना घृतेन मधुना शर्करया च । ततोष्टभिः कलशैः स्नापयेत् । कुङ्कुमरोचनाचन्दनमिश्रितैस्तोयैः स्नापयेत् । सर्वत्र स्नानं तु मूलमन्त्रेण । ततो यन्त्रमुत्तोल्य कुशाग्रेण यन्त्रे स्पृष्ट्वा ॐ यन्त्रराजाय विद्महे महामन्त्राय धीमहि तन्नो यन्त्रः प्रचोदयात् । इत्यष्टोत्तरशतमभिमन्त्र्य प्राणप्रतिष्ठां कुर्यात् । अस्य प्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुमहेश्वरा ऋषयः ऋग्यजुः सामानि च्छंदांसि चैत-

न्यदेवता प्राणप्रतिष्ठायां विनियोगः। आं ह्रीं क्रौं यं रं लं वं शं षं सं हं हों सः अमुकदेवतायाः प्राण इह प्राणाः। एवं आं १३ अमुकदेवताया जीव इह स्थितः। आं १३ अमुकदेवतायाः सर्वेन्द्रियाणि। आं १३ अमुकदेवताया वाङ्मनश्चक्षुः। श्रोत्रघ्राणप्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा। इति प्राणान्प्रतिष्ठाप्य प्रकृतदेवतामावाह्य षोडशोपचारादिना सम्पूज्य षडङ्गेन पूजयेत्। ततः पट्टसूत्रादिकं दत्वाऽष्टोत्तरसहस्रं जपेत्। अशक्तश्चेद्बलिं दद्यात्। ततोऽष्टोत्तरशतहोमं कृत्वा। प्रत्याहुतिसम्पातं दद्यात्। होमाशक्तौ द्विगुणो जपः कार्यः। ततो दक्षिणां छिद्रावधारणं कुर्यादिति यन्त्रसंस्कारः। अथ सुन्दरीयन्त्रसंस्कारे तु कुशाग्रेण स्पृष्ट्वा आमित्यादिना सामान्यतः प्रथमं प्राणप्रतिष्ठां कृत्वा जीवाकर्षिणीं विद्यां यथाशक्ति जपेत्। यथा ऊं ऐं ह्रीं श्रींह्यौः स्हौः स्हौः आं ह्रीं क्रों क्लीं गणपतिकालिकेसौः। सकलह्रीं क्लीं क्लीं ह्रीं स्हौः ह्यौः श्रीं ह्रीं ऐं ऊं मूलगायन्त्रीं जपेत्॥ मूलमन्त्रमपि॥ ततो यन्त्रमध्ये देवीमागतां विभाव्य षोडशोपचारैरर्चयेदिति शेषः॥

आसीच्छ्रीकरुणाकरो बुधवरः कारुण्यदानाकरः श्रुत्याचारविचारसारचतुरो ज्योतिर्विदामग्रणीः। तत्पु-

त्रः पृथिवीशवन्दितपदः श्रीशम्भुनाथः कृती शम्भुध्यानबलेन शम्भुसमतां काश्यामगादादरात् ॥ तज्जस्तु तन्त्राणिशिवोदितानि विलोक्य शम्भोः कृपया पवित्रम्। दीक्षाप्रकाशं किल जीवनाथश्चकार तन्त्रज्ञमुदे विचित्रम् ॥ शके खाङ्कागभूसङ्ख्ये १७९० आरामनवमीतिथौ। जाह्नवीतीरनिकटास्थितः श्रीमैथिलद्विजः ॥

इति श्रीशम्भुनाथात्मजश्रीजीवनाथविरचितो दीक्षाप्रकाशः समाप्तः ॥



अथा न्योविशेषः श्रीकृष्णदत्तोक्तः।

तत्रादौ शिवमाहात्म्यम् । तथा ब्रह्मपुराणे माघकृष्णचतुर्दश्यामादिदेवो महानिशि। शिवलिङ्गसमुद्भूतः कोटिसूर्यसमप्रभः ॥ तथा सौरागमे "प्रहरे प्रहरे स्नानं पूजां चैव विधानतः। शिवलिङ्गस्य कुर्वीत अर्घदानं च भक्तितः। एकेनैवोपवासेन कृतेनात्र तिथौ शिवः। प्रीतये भगवान् देवो भक्तिमुक्तिप्रदायकः। तथा नन्दिकेश्वरः। दृष्ट्वालिङ्गमहेशस्य सर्वपापैः प्रमुच्यते। जन्मजन्मकृतैर्देही मनोवाक्कायकर्मजैः ॥ तथोक्तं स्कन्दपुराणे "मध्यन्दिनकरे प्राप्ते यो लिङ्गं परिपूजयेत्। सम्पूर्णां पृथिवीं दत्वा यत्फलं तदवाप्नुयात् । त्रिसन्ध्यं

T

कुरुते यस्तु प्रत्यहं शिवपूजनम् । वदेन्नामानि तस्यैव स शिवो नात्र संशयः ॥ शतमष्टोत्तरं यस्तु प्रत्यहं शिवमर्चयेत् । एककालं त्रिकालं वा स पुनाति कुलत्रयम् ॥ वरं प्राणपरित्यागः शिरसोवापि कर्त्तनम् । न चैवापूज्य भूञ्जीत शिवलिङ्गं महेश्वरम् ॥ अश्वमेधसहस्रस्य सहस्रगुणितस्य च फलं प्राप्नोति वचनान्महादेवेति नामतः ॥ पाठेनापि नरा नित्यं ये स्मरन्ति महेश्वरम् । तेपि यान्तितनुं त्यक्त्वा शिवलोकमनामयम् ॥ द्रव्यमायुः श्रियं पुत्रान् यच्चान्यन्मनसेप्सितम् । स्फाटिकं लिङ्गमासाद्य जयपानः समश्नुते ॥ प्रातरुत्थाय यो लिङ्गं भक्त्यासम्पूजयेत्सकृत् । कपिलायाः शतं दत्वा यत् फलं तदवाप्नुयात् ॥ सूतके मृतके चैव न त्यजेच्छिवपूजनम् । नैरन्तर्येण षण्मासं पूजये द्विधिना शिवम् । पुण्यं तदेव लभते सकलं विषुवेचनात् । एतदेव च विज्ञेयं ग्रहणे चोत्तरायणे ॥ कार्त्तिक्यां च युगाद्यायां षडाशित्यां विशेषतः । यस्तु कृष्णचतुर्दश्यां स्नात्वा देवं पिनाकिनम् ॥ आराधयेद् द्विजश्रेष्ठ तस्य नास्ति पुनर्भवः । फलानां द्वे सहस्रे तु महास्नानं प्रकीर्त्तितम् । मृत्ताम्रहेमरौप्यैश्च कोटिकोटिगुणं क्रमात् ॥ अत्रान्यदपि ॥ जलजानां तु पुष्पानां बिल्वपत्रस्य चैवहि ।

एषां पर्युषिता शङ्का कार्या पञ्च दिनोर्ध्वतः॥ कणकानि कदम्बानि रात्रौ देयानि शङ्करे। दिवाशेषाणि चान्यानि दिवारात्रौ च मल्लिका॥ अलाभे चैव पुष्पानां पत्राण्यपि निवेदयेत्। फलानामप्यभावेतु। तुणगुल्मौ निवेदयेत्॥ एतेषामप्यभावे तु भक्त्या भवति पूजितः। स्वयं पतितपुष्पाणि त्यजेदुपहतानि च। स्नानं कृत्वा तु ये पुष्पं गृह्णन्ति जड़बुद्धयः॥ देवतास्तन्न गृह्णन्ति न चापि पितरस्तथा। मुकुलेनार्चयेच्चैवमपक्वं न निवेदयेत्॥ फलं व्यथितपक्वं तु यत्नात्पक्वं परित्यजेत्। घृतेन तिलतैलेन तथा चैवौषधीरसैः। दीपं प्रज्वाल्य देवेशे भक्त्या स्वर्गपतिर्भवेत्। तद्यथा भक्ष्यते भक्ष्यं तत्तथैव निवेदयेत्। अन्यथा तत्प्रदानेन न तत्फलमवाप्नुयात्। सकृदुच्चारितो येन मन्त्रः पञ्चाक्षारःशुभः। सप्तजन्मकृतात्पापात् मुच्यते नात्रसंशयः। अपवित्रः पवित्रो वा सर्वावस्थांगतोपिवा। महापातकयुक्तोपि मन्त्रस्यास्य जपाच्छुचिः। कृत्वा प्रदक्षिणं भक्त्या शिवस्यायतनं नरः। अश्वमेधसहस्रस्य श्रेष्ठस्य लभते फलम्। दण्डप्रमाणवद्भूमौ नमस्कारेण योर्चयेत्। स यां गतिमवाप्नोति न तां क्रतुशतैरपि। तीर्थकोटिसहस्राणि यज्ञकोटिशतानिच।

१ धत्तूरपुष्पाणि। २ मध्यान्हस्नानम्

T

महादेवप्रणामस्य कलां नार्हन्ति षोडशीम् । यज्ञोपवीतवासांसि घन्टाव्यजनचामरः । गोभूमिदासीनगरं ग्रामोद्यानध्वजादिकम् । दत्वा कल्पक्षयं यावच्छिवस्यानुचरो भवेत् । मृद्दारुणेष्टिके शैले यो वै कुर्याच्छिवालयम् । त्रिःसप्तकुलसंयुक्तः शिवलोके महीयते । लिङ्गं प्रतिष्ठां कृत्वा तु कुलकोटीः समुद्धरेत् । शिवक्षेत्रसमीपस्थः सर्वा नद्यो द्विजोत्तम । वापीकूपतडागाश्च शिवगङ्गा इति स्मृताः । गङ्गास्नानसमं तत्र स्नानात्पुण्यमुदाहृतम् । तत्र देशे तु दुर्भिक्ष न च मारी प्रवर्त्तते । नाकाले म्रियते कश्चित् पुज्यते यत्र शङ्करः । कश्चित् किञ्चित् यदा पश्येच्छिवलिङ्गमपूजितं तदा सम्पुज्य यो गच्छेत्स याति परमांगतिम् । चिरं पर्युषितं माल्यं शिवस्यापनयेत्तु यः । गोसहस्रफलं तस्य भवतीह न संशयः गोभूहिरण्यवस्त्रादिबलिपूजानिवेदने । ज्ञेयो नमःशिवायेति मन्त्रः सर्वार्थसाधकः ॥ सर्वमन्त्राधिकश्चायमोङ्काराद्यः षडक्षरः । तन्मन्त्रजापी तत्कर्मरतस्तद्गतमानसः । निष्कामः पुरुषो राजन्स रुद्रपदमश्णुते ॥

॥ इति शिवमाहात्म्यवर्णनम् ॥

T

पृ·५ ||कुलाकुलचक्रम्||१ पं·६

| वायुः | अग्निः | पृथ्वी | जल | आकाशः |
|---|---|---|---|---|
| अ | इ | उ | ऋ | लृ |
| आ | ई | ऊ | ॠ | ॡ |
| ए | ऐ | ओ | औ | अं |
| क | ख | ग | घ | ङ |
| च | छ | ज | झ | ञ |
| ट | ठ | ड | ढ | ण |
| त | थ | द | ध | न |
| प | फ | ब | भ | म |
| य | र | ल | व | श |
| ष | क्ष | व | स | ह |
| | | | | |

पं·३

पृ·६ ||राशिचक्रम्|| २



२

॥ अथ नक्षत्र चक्रम्॥ ३

प॰८

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| अआ | इ | ईउऊ | ऋॠऌॡ | ए | ऐ | ओऔ | क | खग |
| अश्विनी | भरणी | कृत्तिका | रोहिणी | मृगः | आर्द्रा | पुनर्वसुः | पुष्यः | आश्लेषा |
| देवगणः | नरः | राक्षसः | नरः | देवः | नरः | देवः | देवः | राक्षसः |
| घङ | च | छज | झञ | टठ | ड | ढण | तथद | ध |
| मघा | पूर्वा | उत्तरा | हस्तः | चित्रा | स्वाती | विशाखा | अनुराधा | ज्येष्ठा |
| राक्षसः | नरः | नरः | देवः | राक्षसः | देवः | राक्षसः | देवः | राक्षसः |
| नपफ | ब | भ | म | यर | ल | वश | षसह | अंअः क्षत्रज्ञ |
| मूलः | पू॰षाढ: | उ॰षाढः | श्रवणः | धनिष्ठाः | शतभिषा | पू॰भाद्रः | उ॰भाद्रः | रेवती |
| राक्षसः | नरः | नरः | देवः | राक्षसः | राक्षसः | नरः | नरः | देवगणः |

पं॰८

T

| सिद्धः | अकडमचक्रम् ४ | | साध्यः |
|---|---|---|---|
| अ क थ ह | उ ङ प | आ ख द | ऊ च फ |
| ओ ड व | लृ झ म | औ ढ श | लॄ ञ य |
| ई घ न | ऋ ज भ | इ ग ध | ॠ छ ब |
| अः त स | ऐ च ल | अं ण ष | ए ट र |

अरिः प्रकारान्तरेण अकडमचक्रम् सुसिद्धः

पृ.१३ पं१



पं. १०

पृ. १२ चतुष्कोष्ठचक्रम् ६

| | | |
|---|---|---|
| | क ङ<br>ओ इ<br>लृ ड<br>उ थ<br>अ प<br>ह म | |
| ठ त न भ ल स<br>ज घ अः ऐं ऋ ई | | आ ऊ लॄ औ ख च ञ<br>ढ द फ य श छ |
| | ई<br>व ऋ<br>र ए<br>व अं<br>ध<br>ण ग<br>ट छ | |

पं. १४

पृ. १३ ऋणधनचक्रम् ७

| | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| ६ | ६ | ६ | ० | ३ | ४ | ४ | ० | ० | ० | ३ | अष्टभक्तशेषाङ्काः |
| १४ | ५४ | ६ | ४८ | ७५ | ३६ | २८ | २४ | ७२ | ८० | ९९ | गुणिताङ्काः |
| २४ | २७ | २ | १२ | १५ | ६ | ४ | ३ | ८ | ८ | ९ | मन्त्राङ्काः |
| अआ | इई | उऊ | ऋॠ | लृलॄ | ए | ऐ | ओ | औ | अं | अः | |
| क | ख | ग | घ | ङ | च | छ | ज | झ | ञ | ट | |
| ठ | ड | ढ | ण | त | थ | द | ध | न | प | फ | |
| ब | भ | म | य | र | ल | व | श | ष | स | ह | |
| २ | २ | ५ | ० | ० | २ | १ | ० | ४ | ४ | १ | अष्टनष्टाः |
| १० | १ | ७ | ४ | ८ | ३ | ७ | ५ | ४ | ६ | ३ | साधकाङ्काः |
| ९० | २ | २१ | १६ | ४० | १८ | ४९ | ४० | ३६ | ६० | ३३ | तद्गुणिताङ्काः |

| पृ॰१८ | षट्कोणचक्रम् ८ | पं॰१६ |
| --- | --- | --- |



पृ॰१९ पं॰४

| ईशानः | इन्द्रः नवग्रहचक्रम ९ | अग्निः |
| --- | --- | --- |
| अङ्गुलः ६ अधिदेवो बुधः विष्णु प्रत्यधिदेव शिवत्रग्रपूः | अङ्गुल १ अधिदेव शुक्रः इन्द्रः प्रत्यधिदेवनाशची | अङ्गुल २४ अधिदेव चन्द्रः उमा प्रत्यधिदेवआपः |
| अं ८ अधिदेवो ब्रह्मा गुरुः प्रत्यधि देवः कुबेरः | अं १२ अधिदेवोऽग्निः सूर्यः प्रत्यधिदेव ईश्वरः | अङ्गुल २२ अधिदेवः मं कुमारः प्रत्यधिदेवः क्षितिः |
| अं १४ केतुः अधिदेवः कालः प्रत्यधिदेव सूर्यः | अं ७ अधिदेवो यमः शनिः प्रत्यधिदेवः प्रजापतिः | अं १२ अधिदेव राहुः चित्रगुप्तः प्रत्यधिदेवो ब्रह्मा |
| वायुः | वरुणः | नैर्ऋतिः |

पृ·२४ मन्त्रसंस्कारार्थं मातृकायन्त्रम् १० पं·६

पृ·३४ पं·१६
११
भूतलिपियन्त्रम्

अइउ ऋलृ
एऐ ओऔ ·०
हयवरल
ङ·कखघग
ञचछझज
णटठढड
नतथधद
मपफभब
शषस



पृ·५८ कूर्मचक्रम् १२ पं·२

| | | | | |
|---|---|---|---|---|
| लक्ष | कखगघङ· | | | चछजझञ |
| शषसह | अंअः | अआ | इई | टठडढण |
| | ओऔ | | उऊ | |
| | एऐ | लृलॄ | ऋॠ | |
| यरलव | पफबभम | | | तथदधन |

पृ.७४ अन्यप्रकारकं यन्त्रम् १३ पं. १४

रां रामाय नम इति मन्त्रस्य

रं   रं   रं   रं   रं   रं
रं रां रंरं रा रंरं मा रंरं य रंरं न रंरं मः रं
रं   रं   रं   रं   रं   रं

पृ.७५ पं.२०

अयं न्यासो मुख्यः॥ पञ्चायतनपूजायन्त्रम् १४ पूर्वमुद्रितपुस्त

| | | | | |
|---|---|---|---|---|
| ग / दु | सूर्य / दुर्गा | सू / दु | विष्णु / दु | ग / सू |
| शिव | विष्णु | गणेश | सूर्य | दुर्गा |
| सू / वि | ग / शि | शि / वि | ग / शि | शि / वि |

अतविद्रगणपत्यादिरीत्यांशिवपूजनम्।

ग्रन्थानुसारं तच्चक्रम्॥

| | | | | |
|---|---|---|---|---|
| वि / शि | शि / ग | वि / सू | शि / ग | वि / शि |
| दुर्गा | विष्णु | शिव | सूर्य | गणेश |
| सू / ग | दु / सू | दु / ग | दु / वि | पार्वती / सू |

पृ.७६ पं.८

त्रुटिः। ढुं गणनाथं च नैर्ऋत्यां केशवं तथा। वायव्यां

